Vol. XXXXII. February 1960

No. 10 १८८१ शकीये

४२श-वर्षस्य माघे

१०म-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम

( Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्

श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।

Foreign price—1-4d

अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १६५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्षत्वेण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

## तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम्-डि-महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए, बि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

---

Printed by Bishnupada Bhattacharyya M. A. Kavyatirtha, at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta—4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

संस्कृतसाहित्यपरिषत्

Vol. XXXXII. No. 10 | १८८१-शकीये माघे ४२श-वर्षस्य १०म-संख्या | February 1960.

# मतिमञ्जरी

## गान्धर्वविद्यानुशीलनम्

[ निबन्धकः—श्रीरामधनशास्त्री ]

वङ्गेषु वङ्गेतरेषु च भारतेषु देशेषु प्रतिदिनमिदानीं वर्धते गान्धर्वविद्यानुशीलनं सविशेषम्। नवीननवीनं गान्धर्वविद्याशिक्षाप्रतिष्ठानं प्रतिष्ठाप्यते यत्र तत्र तदभिज्ञैः। नित्यं चासंख्याताः शिक्षार्थिनोऽपि तत्र शिक्षामधिगत्य कृतविद्या भवन्ति। तत्तद्विद्यालयेभ्यश्च शिक्षां समाप्य कृतविद्यताया निदर्शनभूताः प्रान्तीयप्रतियोगितामूलिकाः परीक्षाः समुत्तीर्णाः ख्यातिं महतीमधिशेरते। प्रतिष्ठानेष्वेतेषु न केवलं बाला एवाधीयते, परं बालिका अपि। प्राचीनकालादारभ्य भारतवर्षमिदं गान्धर्वविद्याया निकेतनमासीदिति नाधिकोक्तिः। गीते वादित्रे नृत्ये च विशेषतः प्राधान्यमधिगतोऽयं देशो देशान्तरेभ्यः। एतद्देशीया राजानो मन्त्रिणो विविधपर्य्यायभाजश्च गान्धर्वविद्यां सर्वथा समाद्रियन्ते स्म। धनिकानां राज्ञां वा तदानीन्तनानां प्रायेण प्रत्येकमेव गृहेषु गीतवादित्रादिविधये तत्तदभिज्ञानां नियुक्तिरासीत्। वैदिकयुगे सामवेदानामध्ययनाध्यापनादिशा वैशिष्ट्यमिदं ननु ? रामायणीययुगे महर्षिणा बाल्मीकिना

रामायणगानमधिकृत्य दत्तशिक्षौ लवकुशावेव किं तत्र न प्रमाणम् ? महाभारतीययुगे च विराटराजकन्यकाया उत्तराया नृत्यगीतादिशिक्षार्थं बृहन्नलारूपिणोऽर्जुनस्य नियोगोऽपि वा प्रमाणमन्यत् ? एतद्वते उर्वशीरम्भाप्रमुखानामप्सरसां गान्धर्वविद्यासु प्रावीण्यमपि प्राचीनप्रमाणसिद्धमेव। एतावता गान्धर्वविद्याशिक्षायाः प्राचीनत्वे कस्य वास्ति विमतिः। परमिदमत्र महान्तं विस्मयमावहति यदिदानीं एतद्विद्याशिक्षणविधौ प्रायेण सर्वत्रैव प्रतिष्ठानेषु संस्कृतभाषामयगीतादीनां परिवर्जनं वङ्गादिभाषामय्याश्चाधुनिक्याः गीतेरनुशीलनं दरीदृश्यते।

मन्ये जननीमपहाय तत्पुत्रीषु समादर इवायमपप्रयासोऽनुशीलयताम्। यतो मातृभूतां साममयीं संस्कृतस्तोत्ररूपिणीं च गीतिं विसृज्य वङ्गभाषामय्या हिन्दीभाषापरिपुष्टाया औड्रादिभाषारूपिण्या वाधुनिक्या गीतेरनुशीलनं न केवलमशोभनमुपहासास्पदमपि। न खलु मातरं वर्जयित्वा कोऽपि जगति वरीयान् भवतीति निश्चितम्। किञ्च, गीतानुशीलनप्रतिष्ठानेषु यदीदानीन्तनी व्यवस्था कियन्तं कालमपि प्रचलेत्, तदा संगीतजगति संस्कृतभाषामय्या गीतेर्नामापि न स्थास्यतीति किंवा बहुभाषणेन। तदाशास्महे,—अतः परं गान्धर्वविद्याप्रतिष्ठानैः सर्वैरेकीभूय अपरापरभाषामय्या गीतेरनुशीलनव्यवस्थापन इव संस्कृतभाषामय्या गीतेः शिक्षणविधावपि सादरं दत्तावधानैर्भवितव्यम् इति शम्।

---

# शान्तिनिर्णीतिः

निबन्धकः—श्रीकालीकुमारकाव्यवेदान्ततीर्थः, एम्. ए

विषयजसुखमूलं निष्क्रियं सक्रियेषु हृदि विकृतिषु शुद्धं चेतनं निर्विकारम्।
जडविजडविधातृव्याप्तमव्यक्तमेकं परमसुखनिदानं नौमि चात्मस्वरूपम् ॥१॥

सुखं न कस्यापि जडाद्भिनात्मना क्षयादिदुःखं विषयेषु भोगिनाम्।
सुखस्वरूपो भ्रमतप्तदेहिनां रसश्चिदात्मा शरणं हि केवलम् ॥२॥

मनः सरागं विषयाः सुखाकरा मनो विरक्तं विरसा नु ते जडाः ।
ततो धियोऽपि प्रभु भाति चेतनम् तदेव शान्तेः परमञ्च कारणम् ॥३॥
निजस्वरूपं परिहाय मानवो भ्रमस्य वीजं महतः प्ररोहति ।
अनीशकः शोचति मुह्यति स्वपन् किमत्र शान्तेर्विषमं न कारणम् ॥४॥
कुतः सुखं वै वहिरन्तरात्मनो वरं द्वितीयाद्धि भयं श्रुतेः श्रुतम् ।
तथाप्युपाधेरमृताय साधना विचित्रमज्ञानमथाविवेकिनाम् ॥५॥
सदात्मबुद्धिर्वपुराद्यनात्मसु चितेरवोधाच्चिति वा जडात्मधीः ।
भवज्वरैस्तापयते शरीरिणो व्यथा यतोऽस्याः शमने न साधना ॥६॥
सुखेप्सया वेद परं य आत्मनः करोति मोहादुदरं तदन्तरम् ।
स हन्ति शान्तिं गुरु दुःखमश्नुते कथञ्च भोगाः स्वसुखस्य कारणम् ॥७॥
सुखं जनेभ्यो यदिह प्ररोचते त्वरं सुखाभासतया न तात्त्विकम् ।
अणोः कृते यन्महतो न लोकनम् कुतः प्रशान्तिश्चरतः सतोऽनृते ॥८॥
जडेषु यावद्वहिरात्मनो मनो मनोव्यथा तावदिह प्रवर्धते ।
रसो न विक्षिप्ततयैव चेतस उदेति शान्तिर्नियतास्य निग्रहात् ॥९॥
जडाः प्रमेया विषया बहिःस्थिता-स्तथा मनोग्राह्यतयैव सन्ति ते ।
परं स्वतस्ते न च कार्यकारिणः पृथङ् न दृग्दृश्यतया मृषैव ते ॥१०॥
ममत्वबुद्ध्या विषयेषु खिद्यते जगत्सु दृश्येषु हि नामरूपता ।
स्वतो न तेषां व्यवहारहेतुता फलेन विज्ञानतयोपयोगिता ॥११॥
वहिर्जगज्जाग्रति यच्चराचरम् मनोगृहीत्वात्मनि तत् प्रकाशते ।
मनोऽन्तरेणास्य सदाप्रयुक्तता जगच्च दृष्टं क परं मनोमयम् ॥१२॥
भवेन्नृजाग्रद्व्यवहार आन्तरस्तदापि सर्वं कुरुते मनश्चरत् ।
स्वतन्त्रता नो जडनामरूपयोर्विचारतः स्वप्नसमो हि जागरः ॥१३॥
जगद्वहिर्जागरणेऽस्ति केवलम् क्रिया जडत्वान्न तदापि तस्य वै ।
मनो हि सर्वार्थविधायि दृश्यते त्वविद्यया सत्यतयास्य वेदना ॥१४॥
प्रपञ्चसत्यत्वमतेर्बहुव्यथा उपैति जीवः स्वसुखस्य कारणात् ।
जगत्सहित्वा स्वपनेऽस्ति चेतसा कथं पुनर्जाग्रत एव सत्यता ॥१५॥

यदि प्रबोधात् स्वपनं मृषा भवेन् मनःस्थितेर्वा विषयानपेक्षणात् ।
प्रजागृतेर्वा स्वपने सदा लयात् तथा मृषा किं स्वपनान्न जागरः ॥१६॥
अपैति जाग्रत् स्वपने स्वभावतर्न जाग्रदास्ते सततं सचेष्टितः ।
द्वयोर्मिथोऽतः खलु बाधमानयो—र्न जीव एकं गुरु सत्यमाचरेत् ॥१७॥
स्वभावतो जागरितो यथा जनो भयाभयैः स्वप्नमयैर्न युज्यते ।
तथा सतीह स्वपने न पण्डितैश्चलेषु जाग्रद्विषयेषु मुह्यति ॥१८॥
अवास्तवं स्वप्नवदात्मविद्धजहाति भावं निखिलञ्च जाग्रतम् ।
चितो लसन् बालिशवास्तवे स्वपन् समेति शान्तिं परमां सनातनीम् ॥१९॥
प्रशान्तिमप्राप्य बहिश्चलं मनः स्वतः सुषुप्तं ससुखं सकारणम् ।
परं सुशान्तं लयवन्नबोधकृत प्रमानयत्येव सुखं न बाह्यतः ॥२०॥
चितेरविद्या न धिया विशेषिता विशेषिणां बीजतयैव सा स्थिता ।
सुषुप्त्यवस्थैवमतो मनोलयात् सुषुप्तिरानन्द उपासितात्मना ॥२-॥
य एव कर्त्ता प्रतिजीव आस्थितः समस्तसंसारविपत्तिकारणम् ।
अवश्यमुद्भावितयाच्छिनत्ति तम् पुनः सुषुप्तिः प्रभुताधिकारिणी ॥२२॥
स्वबाह्यदृश्यान् विषयानयोगवत् शरीरमात्मेति न बोधवत्तथा ।
वपुश्च यत् स्वप्नमयं निलीय तत् सुषुप्तिरन्तर्घटतेऽखिलेषु वै ॥२३॥
क्रमेन बोधात् स्वपनं ततस्तथा पुनः सुषुप्तिः परमत कारणे ।
न कर्त्तृजीवो न च तस्य संसृतिर्विशेषसाम्याच्छ्रम एव केवलम् ॥२४॥
न कोऽपि सर्वव्यवहारहारिणीम् सुषुप्तिमप्राप्य सदा स्वतो वसेत् ।
क्वचित् स्थितं वा क्वचिदस्थितञ्च यन्न तेन शान्तिं लभतेऽसता बुधः ॥२५॥
अहं शरीरं विषया इमे च मे त्वशान्तिरेवं स्वपने न बाह्यतः ।
मनोविकारोऽसमतात्त कल्पिता क्रमात् सुषुप्तौ स्वत एव लीयते ॥२६॥
चिदंशरूपेण सभेदमानवा उपाधिना जाग्रति येन सक्रियाः ।
स नृष्वहङ्काररसो न सन सदा निवर्त्तते वै सत आत्मनश्चितः ॥२७॥
उपाध्यहङ्कारनिवर्त्तनं पुनर्विवर्त्तनेनारभते यथा स्थितम् ।
ततः सुषुप्त्या घटमानया स्वतः प्रयोजनं किं तदुपाश्रयेण वा ॥२८॥

चितस्तदाभासतया सजीवता तथात्मनस्तद्व्यतिरेकदृष्टये ।
सुषुप्तिरुक्ता न चिरं सुसान्त्वगा महाज्ञताद्वार्हति चित्प्रकाशनम् ॥२९॥
मतेर्विलोपेऽपि यदा चिदन्वयो नृणां विशेषेण मृषाल मत्तता ।
सुषुप्तिशान्तिर्हृदि तन्निवारणी त्वशाश्वती सा सहजैकदाप्यते ॥३०॥
सुषुप्तितो यद्यपि शान्तिरेकदा त्वसाधनप्राप्यतयाऽप्रयोजना ।
पुनः सविच्छेदतयास्ति देहिनाम् न साथ काम्योत्सतया हि संसृतेः ॥३१॥
परं सुषुप्तेरपि तत्प्रकाशकम् प्रकाशमात्रं खलु साक्षिचेतनम् ।
ध्रुवं तुरीयं पदमात्मनोऽक्षरम् प्रमार्जितव्यं नियतं सुशान्तये ॥३२॥
प्रकाशयेत् स्वां न सुषुप्तिरात्मना स्वयं तदा सा विदिता स्मृताधुना ।
ब्रवीति वै सैव मनोलयेऽप्यतः प्रकाशितत्वाद्धृदि तत्प्रकाशकम् ॥३३॥
यदा चिदाभासलयोऽपि बुध्यते तदास्ति तस्योपरि कोऽपि बोधकः ।
य ईक्षते केवलमेव सन् सदा भवेत् स्वरूपं हि स सर्वदेहिनाम् ॥३४॥
मतेर्विनैवं विदिते च तल्लये ततोऽस्त्यवस्थात्रयसाक्षिचेतनम् ।
प्रभानकृद्यन्न कदाप्यभाववदुपाध्यधिष्ठानमतद्विधं परम् ॥३५॥
न कर्त्रुपाधिः स्थितिमान् स्वसत्तया परन्त्वधिष्ठानचिता स सत्त्ववान् ।
इवेह नाम्ना व्यवहारिको मलो न कापि सत्ता परमार्थतो निजा ॥३६॥
अबोधदृष्टः प्रतिजीवभेदभागशेषदुःखप्रतिपत्तिकारणम् ।
सकर्त्रुपाधिश्चिति चैव कल्पितः पृथक् स्ववृत्त्या न चितोऽस्ति वस्तुतः ॥३७॥
चितं स हित्वा न पृथक् स्वतोऽस्ति चेच्चितोऽपि चेन्नानृतनामरूपता ।
ततो मृषावस्तु स रज्जुसर्पवन्न चिच्चितोऽन्यो न चिता न युज्यते ॥३८॥
घटादिकार्येषु यथा मृदेव सत् तथा विशेषो न चितश्चिदेव सत् ।
ततोऽनृतो जीव उपाधिरात्मनः स मुक्तये हेय उ चिद्विवेकतः ॥३९॥
विकार्यते चिन्न परं विवर्त्तते मुधात आरोपितजीव ईक्ष्यते ।
स शान्तये चित् प्रतिपत्तये सधोर्निवर्त्तनीयः खलु नेति संविदा ॥४०॥

( क्रमशः )

---

# प्रपञ्च-पञ्चकम्

[ निबन्धकः—अध्यापक-श्रीदुर्गादासगोस्वामी एम. ए., साहित्यशास्त्री ]

मायारम्भविजृम्भणं जगदिदं स्वप्नेन्द्रजालोपमं
मिथ्याभूतमवास्तवं पटुनटीकापट्यवन्मोहकम् ।
स्वाद्यं मद्यमिवानवद्यमसतीभ्रूभङ्गवद्भङ्गुरं
बिभ्रत् क्षुभ्यदुदन्वदूर्मिकुलवद्रूपान्तरञ्च क्षणात् ॥१

पक्वं बिम्बफलं यथा बत ! भवत्यापातरम्यं नृणा-
मादर्शे प्रतिबिम्बमुद्रणमिव प्रायः प्रतीपं जगत् ।
किञ्चेदं मृगतृष्णिकेङ्गितमिवात्यर्थं मरुप्रान्तरे
सर्वाकर्षकशोषकं सममपि प्राणप्रमोषक्षमम् ॥२

सन्ध्याभ्रे पतितं क्षणाच्च शवलीभूतं भृशं पेशलं
शून्ये पश्य ! विलीयते लघुतरं सूर्यांशुजालं यथा ।
एतत् पुत्रकलत्रमित्रसहितं तावत्पदार्थैस्तथा
सर्वतो परिवर्ततेऽनवरतं हाऽकल्यवर्तं जगत् ॥३

नद्याः स्रोतसि शीर्णजीर्णतृणवत् कालप्रवाहे पत-
च्चेतोहारि चराचरं जगदिदं शश्वत् प्रधावत्यहो ! ।
किञ्चेदं सपदि प्रणश्यति दृशो हन्तान्तरालं गतं
हा ! हा ! जीवकुलं तथापि जगति स्नेहानुरक्तं सदा ॥४

अन्तर्हेय-वहिर्मनोहरतरं मायाप्रपञ्चात्मकं
किंयत्सुन्दरबुद्बुदोदरमिव व्यक्तं तु रिक्तं जगत् ।
हा ! धिग् धिक् ! कृपणास्तथापि तु जनः सद्यः प्रपद्याभयं
सान्द्रानन्दमयं शिवं परपदं नोज्झत्यसद्वासनाम् ॥५

---



# वेदान्तविमर्शः

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तः )

यथागाधसलिलसमाहितो जालुकप्राप्तो महर्षिः,

अत्र समाधिकाले पित्रादयो न सन्तीत्यादि। अनन्वागतं पुण्येनेति, अनारब्धानां सर्वेषामेव सञ्चितानां पुण्यानां पापानां च क्षयादसम्बन्धं पुण्येन पापेन च तद्रूपमित्यर्थः।

"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुतेः।

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथे"ति स्मृतेश्च अत्र स्वप्नवदसङ्गो ह्ययं पुरुष इति नोक्तं तत्र वीजं स्वप्ने पुण्यपापहेतुदर्शनेऽपि स्वप्नदर्शी पुण्यपापाभ्यामसम्बद्धः। अत्र हेतुरुक्तो यतोऽयं स्वप्नदर्शी पुरुषः पुण्यपापकर्मभिरसङ्गः जाग्रत्काले यथा कर्मभिः संबध्यते न तथा स्वप्ने कर्मानाचरणादित्यर्थः। अत्र तु ज्ञानिनः समाधिकाले स्वप्नवत् पुण्यपापकर्माचरणज्ञानस्याप्यभावान्न तत्सम्बन्धशङ्कापीति नोक्तं तत्, परं सञ्चितपुण्यपापक्षय एवेति। तत्फलमाह हि यतो ज्ञानी सर्वदुःखातिगो भवति तस्य सुखस्यापि दुःखरूपत्वात्। अथवा हिरवधारणे पुण्यपापक्षयात् सर्वदुःखातिग एव भवतीत्यर्थः।

समाधिकाले पित्रादयो न सन्तीत्युक्तं तत् किं बौद्धानामिव जगज्जननीभूताया अविद्याया विद्यया विलोपात् पित्रादीनां तत्कार्याणां विलोपादेव तेषामभावः, यथाह चन्द्रकीर्तिः "तत्त्वदर्शने हि सर्वपदार्थानामेवानुपलम्भात् नास्ति किञ्चिद्यदादाय कर्म कुर्यात्, तथा अविद्वान् कारकस्तस्मान्न विद्वांस्तत्त्वदर्शनादि"ति। उत सतामपि तेषां दृष्टेरभावादननुभवः? नाद्यः वेदान्तनयेऽविद्यायास्तादृश्या असिद्धेर्ब्रह्मण एव सर्वकर्तुर्निमित्तोपादानत्वात्, न द्वितीयः द्रष्टुरात्मनोदृष्टेर्ज्ञानस्यात्मप्रकाशरूपस्याविनाशित्वात् तर्हि किंनिमित्तोऽयमभावस्तत्राह "यद्वै तन्न पश्यती"ति, पित्रादीनां विद्यमानत्वात् पश्यन्नपि तान्

विद्याभावदशावदात्मद्वितीयत्वेन भिन्नं विभक्तं न पश्यति किन्तु सर्वकारणादात्मनोऽव्यतिरिक्तत्वेनैव पश्यतीति पूर्वस्माद्वैलक्षण्येन दर्शनात् पश्यन्नपि पित्रादिकं नानादिकालनिरूढद्वैतसंस्कारसञ्जातद्वितीयतया भिन्नं विभक्तं पश्यति, किन्तु मृदभिन्नो घटः सुवर्णं कुण्डलं तन्तवः पट इतिवद्विद्यमानमेव कार्यं कारणादभिन्नमेव पश्यतीत्यर्थः। यथा उतत्वः पश्यन् न ददर्श वाचम् उतत्वः श्रृण्वन् न श्रृणोत्येना''मिति। एकोऽज्ञो वेदवाक्यं पश्यन्नपि अर्थज्ञानाभावात् सम्यक् न पश्यति, अन्यो व्याकरणाभिज्ञोपि मीमांसाज्ञानाभावेन तात्पर्यज्ञानाभावाद् वेदवाक्यं श्रृण्वन्नपि सम्यङ् न श्रृणोतीत्यर्थः। पितापुत्रसम्बन्धजनककर्मणोऽभावादत्र पिताप्यपिता भवतीति न युक्तं तादृशकर्मणः पुत्रजन्मोत्तरमेव क्षयान्न सुषुप्तिकालापेक्षा, एवमुत्तरत्र। सति संपद्य न विदुः सति संपद्यामहे" "इमाः सर्वाः प्रजा इमं ब्रह्मलोकं न विन्दन्ति" विनाशमेवापीतोभवतीति श्रुतिभिः न किञ्चिदवेदिषमित्यनुभवाच्च सुषुप्तौ ज्ञानाभावात् पश्यन्निति विप्रतिषिद्धम्। यत्र त्वन्यदिव स्यादिति, यत्र तु विद्याऽभावकाले अभिन्नमपि मोहाद्भिन्नमिव स्यात् प्रतिभासात् तदा अन्यः ब्रह्मणो भिन्नः क्षुद्रतमोजीवश्चक्षुरादिभिरन्यत् पश्येदित्यादि! अत्र स्वप्रकाशेनैव ज्ञानेन विषयाणां पित्रादीनां दर्शनान्नानेन मिषेण केन कं पश्येज्जिघ्रेदित्यादि स्वीयमायावादानुप्रवेशस्यावसरः।

निर्मले विपुले जलनिधावेकीभूतोदविन्दुवद् ब्रह्मसलिल एकीभूतो द्रष्टा जीवोऽद्वैतोऽविभक्तो भवति, तथा च श्रुत्यन्तरम् ;—

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।
एवं मुनेर्विजानत आत्मा भवति गौतम" ॥ इति

न्यायश्च "अविभागेन दृष्टत्वादि"ति। तथा चाविभक्तत्वमेवाभिन्नत्वं श्रुतेः सूत्रस्य च मतमिति स्थितम्। हे सम्राट् एष समाधौ दृष्टः परमात्मा ब्रह्मलोकः ब्रह्मैव लोक इत्यर्थः। "आत्मा वा अरे द्रष्टव्य" इति दर्शनश्रुत्यैव समाधेर्थसिद्धत्वात् द्रष्टेत्यनेन समाधिरेवोक्तो न सुषुप्तिः, सुषुप्तिप्रकरणेषु कुत्राप्यात्मदर्शनानुक्तेरिति बोध्यम्। 'विनाशमेवापीतोभवती"ति श्रुतेः, "न च सुषुप्तस्य

ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्राय''इत्युक्तं परैरपि। लोके च न किञ्चिद-वेदिषमिति। एषाऽस्य ज्ञानिनः परमा गतिर्ब्रह्मात्मैकत्वमेव मुक्तेरभ्युपाय इत्यर्थः। एषा च परमा सम्पत् अविनश्वरं धनं चिरतरभोगेनापि न क्षीयते। एषोऽस्य परमो लोकः शाश्वतं निरामयं स्थानम्। एषोऽस्य परमो नित्यो दुःखासंभिन्नो निरतिशय आनन्दः, एतस्यैव निरतिशयनित्यसुखस्य लेश-मात्रममुक्तजीवा ब्रह्मादिस्थावरान्ता उपभुञ्जते इत्यर्थः। स एको ब्रह्मलोक आनन्द इति, ब्रह्मचितानन्दमयं, तल्लोकोऽपि चिदानन्दसखो नित्यत्वात् ''त्रिपादस्यामृतं दिवि त्रिपादूर्द्ध्वमुदैत् पुरुष'' इति श्रुतिप्रतिपाद्यत्रिपाद्भूतं स्थानं ''स्थानं प्राप्स्यसि शाश्वतम्'' 'यत् सांख्यैः प्राप्यते स्थानम्' ''यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम'' इति स्मृतिप्रतिपाद्यं च। परस्ता''त्क्षुः पन्था विततः पुराणः'' ''तस्मिन् शुक्लमुतनीलमाहुरि''ति मुक्तस्य ब्रह्मलोकपक्षोऽपि वक्ष्यते। ( क्रमशः )

---

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

## अष्टादशः सर्गः

स्वकृत्यसम्पादनयोग्यरूपे तन्मन्दिरे साधुविधानमग्नः।
शिष्यैः समं योगिनगेन्द्रनाथ-श्चित्ते परं हर्षमसौ प्रपेदे ॥१
नित्यान् विधीनेष चचार काले काले तथा काम्यविधीनकार्षीत्।
विशालमास्थानगृहं स लब्ध्वा व्यधात् प्रसन्नः सुकृतप्रचारम् ॥२

भक्ताः क्रमेणैव विवृद्धिमीयुस्तदीयकीर्त्तिप्रचयेन सार्द्धम् ।
ध्यानप्रकाशप्रमुखाः सुशिष्या यत्नेन चक्रुर्विधिसुव्यवस्थाम् ॥३
गुरोः क्रियासु प्रथमः सहायो ध्यानप्रकाशोऽनलसः सदैव ।
सर्वाणि कृत्यानि तदाश्रमस्य सुष्ठु व्यवस्थापितवान् विचारैः ॥४
ध्यानप्रकाशस्य गुणातिरेकात् तस्यातिमानं विदधुः किलान्ये ।
नगेन्द्रनाथस्य विनीतशिष्यास्तेनास्य चित्ते समभूत् प्रसादः ॥५
प्रभूतयत्नैर्गुरुणा वितीर्णो योगः परं तत्न दधौ प्रतिष्ठाम् ।
ध्यानप्रकाशो नियमानुवृत्तौ गुरोः पदाङ्कानुगतोऽतिमात्रम् ॥६
यथा यथासौ गुरुणोपदिष्टस्तथा तथैवानुससार कृत्यम् ।
क्रियावली योगिवरे निरूढा छायेव संक्रान्तिमवाप तस्मिन् ॥७
ध्यानप्रकाशे प्रियशिष्यभूते कृत्यस्य सर्वस्य निधाय भारम् ।
उपप्लवान्मुक्तिमुपेत्य योगी ध्यानेन दीर्घान् समयाननैषीत् ॥८
कदाचन ध्यानमितः प्रगाढं पश्यन्निव ध्येयतमं समक्षम् ।
अगाधमानन्दमवाधमिद्धं प्राप्तः स मेने जननं कृतार्थम् ॥९
कदाचन क्षीवसमो जहास कदाचनाश्रूणि तथा मुमोच ।
कदापि सम्बोध्य हरिं परेशं नानाविधां वाचमसौ जगाद ॥१०
स्वेन प्रणीतं परमार्थगीतं गायन् कदाचित् स वभूव मुग्धः ।
तदा सदा श्रीहरिमेव भावादेकान्तभावं शरणं चकार ॥११
एवंविधापूर्वदशाश्रयोऽपि चिरोचिताद्धर्मनयप्रचारात् ।
न योगिराजो विरतिं प्रपेदे स्वकृत्यनिष्ठा महतां हि धर्मः ॥१२
नानाविधाचारपरिश्रमेण वयोऽतिपातेन च कालधर्मात् ।
अस्वास्थ्यलिङ्गं विवभौ तदङ्गे शरीरधर्मः सुतरामजेयः ॥१३
स्वल्पप्रकाशे किल तत्न तस्मिन् दृष्टिर्गता यद्यपि नापरेषाम् ।
ध्यानप्रकाशस्य तथापि नासौ वभूव भावः किल दृष्टिवाह्यः ॥१४
ज्ञात्वा रुजायाश्च विधां स पृष्ट्वा वैद्यं समामन्त्रयितुं सकामः ।
सम्प्रार्थयामास गुरोर्निदेशं स तस्य कामं न तदानुमेने ॥१५

उवाच चैनं मधुराक्षरेण कथं नु वत्सासि विचञ्चलस्त्वम् ।
मम श्रमेणैष वपुर्विकारो योग्यं वपुर्नह्यमितश्रमाणाम् ॥१६

तल्लाघवे तस्य कृते श्रमस्य स्वस्थं शरीरं भवितेत्यवेहि ।
मेघप्रतानेन विनान्तरिक्षं शरद्ऋतौ निर्मलतां वृणीते ॥१७

श्रुत्वा गुरोर्वाचमसौ विनीतो ध्यानप्रकाशो विरराम कामात् ।
स्वास्थ्यं समासादयितुञ्च भूयो गुरुः श्रमं स्वं लघयाञ्चकार ॥१८

वातप्रकोपस्य च शान्तिहेतोः सुखासनं योगमतं बबन्ध ।
क्रमेण शिष्येषु गतं प्रचारं शरीरवैकल्यमथाप्यशान्तम् ॥१९

शिष्येषु ये वैद्यवराः प्रसिद्धाः श्रुत्वा त एते गुरुमभ्यगच्छन् ।
न्यरूपयन् भेषजमप्यपेक्ष्यं विनापि कामं तदिदं स वव्रे ॥२०

भैषज्यमेतन्नियमेन योगी संसेवमानोऽपि रुजा न मुक्तः ।
क्रमेण वृद्धिं गत एव रोगः परं बबाधेऽस्य विधेयजातम् ॥२१

गुरोरवस्थां प्रसमीक्ष्य दुःस्थां पर्य्याकुलाः शिष्यचया अभूवन् ।
ध्यानप्रकाशो गुरुभूतिमुग्धः प्रचिन्तयामास तदाकुलः सन् ॥२२

अहो ! रुजाया महिमाप्रमेयो यदीदृशेऽप्यञ्चति तत्प्रभावः ।
बुद्धादयोऽपि प्रचितप्रभावा रोगप्रभावेण गताः प्रणाशम् ॥२३

शीलं पवित्रं ललिता वपुःश्रीर्लोकोत्तरा बुद्धिरुदात्तविद्या ।
धनं प्रभूतं सुगुणास्तथान्ये प्रकुर्वते नैव रुजां निरोधम् ॥२४

कालस्य धर्मेण जरा शरीरे जागर्त्ति कस्तस्य भवेन्निरोद्धा ।
बलक्षये वा वपुषि प्रजाते न भेषजेनापि जनोपकारः ॥२५

न भेषजं व्याधिनिषेधमेवं करोति यद् योगिवरस्य देहे ।
बलक्षयस्तेन कलेवरेऽस्य शक्यानुमानो विपदो निदानम् ॥२६

आ शैशवादेव मयाविरामं संसेवितं श्रीगुरुपादपद्मम् ।
परं पुरा नैव कदापि दृष्टस्तथाविधव्याधिपराभवोऽत्र ॥२७

तत् किं प्रयाणस्य बभूव कालो महामहिम्नो नियतो गुरोर्मे ।
यद्गोचरं चिन्तनमप्यशक्यं शून्यायते येन जगत् समस्तम् ॥२८

हित्वाथवामङ्गलवस्तुचिन्तां प्राणैः पणैः क्षेमगतिर्विधेया ।
नैराश्यलेशोऽपि हृदा प्रहेयो यो मङ्गलं हन्ति करोत्यनिष्टम् ॥२९

आहूय तद्वैद्यमतिप्रवीणं तत्रैव भारो वपुषोऽस्य देयः ।
दीपेन यद्ध्वान्तमशक्यनाशं भास्वानवश्यं तदलं निहन्तुम् ॥३०

( क्रमशः )

---

राजस्थानसंस्कृतसाहित्यसम्मेलनस्य भीलवाड़ाधिवेशने तदीयशिक्षापरिषदध्यक्ष-
पण्डितप्रवर-ब्रह्मश्री-**पट्टाभिरामशास्त्रि**-शास्त्ररत्नाकर-
विद्यासागर-मीमांसान्यायसाहित्याचार्य्याणाम्

## अभिभाषणम्

( पूर्वानुवृत्तम् )

सम्प्रति सर्वमिदमधरोत्तरं दृश्यते प्राज्यं स्वातन्त्र्यसुखमनुभवत्यपि भारते । निम्नोन्नतेषु प्रदेशेषु गच्छन् शकट इव भारतदेशस्सम्प्रत्यनुभूयते । भारतमाता विनेयानामसह्यानि कर्माण्यनुभवन्ती सस्नेहं सास्रुनयना तान् वीक्षत इव । सर्वकारे प्रभूतं द्रविणं शिक्षाविषये व्ययितवत्यपि शिक्षायाः पवित्रं फलं नोपलभ्यते। अध्येतॄणां संख्यावृद्धिमवलोक्य तदनुसारं प्रतिहायनं नूतनानि विद्यामन्दिराणि सर्वकारो निर्माति, शिक्षकांश्च तत्र नियोजयति, परं सहैवानेन कर्मणा विनेयानामविनयं प्रशमयितुं राजपुरुषाणां न्यायाधीशानाञ्च नियोगः कर्तव्यो भवति सर्वकारस्य । क्व वा पवित्राया शिक्षायाः प्रयोजनं शमदमादि-सम्पत्समृद्धिः चारित्रसम्पादनञ्चेति ? क्व वाऽयं विनेयानामविनयः ? सम्प्रति विनेयाः शस्त्रेणास्त्रेण वा छुरिकया भुसुण्ड्या वा शिक्षकान् भीषयन्तः परीक्षासु साफल्यमवाप्तुं समीहन्ते। अधिकारिभिरुन्मिषिते निमिषिते वा क्षुते जृम्भिते वा छात्रा धर्मघटं कर्तुमारभन्ते। किमत्र कारणं भवितुमर्हति ? किं शिक्षकाणामसामर्थ्यम् ? आहोस्वित्सम्प्रतितनशिक्षाक्रमस्यैव दूषितत्वम् ?

मम तु प्रतिभाति-यदुभयत्रैव कियान् दोष इति। न हि बाला विनेया अविनये स्वतः प्रवृत्ता भवेयुः। कुतश्चित्तैरस्मिन् कर्मणि प्रेरणा लभ्यत एव। यदा हि शिक्षकाः स्वीयमध्ययनाध्यापन-लेखन-भाषण-तत्त्वविमर्शनादिव्यापारं त्यजन्तो राजनीतौ प्रविशन्ति तदायमनर्थस्समुद्भवति। राजनीतिस्तु गहना विचित्रा च भवति। सा हि रागं द्वेषञ्च समुत्पादयेत्। स्वभावोऽयं गुणो दोषो वा तस्याः। तत्र रागद्वेषविनिर्मुक्तानां शिक्षकाणां कस्सम्बन्धः? शिक्षा-शास्त्रिणां जीवनं परमं पवित्रं खलु भवति। राजनीतेरन्यः पन्थाः, शिक्षाया-श्चान्यः। स्वे स्वे पथि विचरन् शासकश्शिक्षको वा साधुकर्म सम्पादयितुं प्रभवति। मार्गयोरनयोर्मिश्रणं दोषाय कल्पेत। शासकैरेवमेव शिक्षणं कर्तव्यमिति न निर्बन्धः कर्तव्यः, शिक्षकैश्चैवमेव शासनं कर्तव्यमिति निर्बन्धो न विधेयः। यर्हि उभयोर्व्यतिक्रमो भवति, तर्हि समापन्नं रागद्वेषादिकालुष्यम्। निसर्गसिद्धोऽयं गुणः, यन्महतां व्यतिक्रमं विलोक्य विनेयाः कोमलमतयोऽपि पन्थानमतिक्रम्य वर्तेरन्निति। केरलप्रान्ते कामनिष्ठानां प्रशासनावसरे स्वपक्ष-परिपोषणाय शासकाः शिक्षाक्रमं परिवर्तयितुमारभन्त! पूर्वेद्युस्त आसन्, अद्य तु ते न सन्ति। परिवर्तितस्य च शिक्षाक्रमस्य पुनः परिवर्तनञ्चेद्भविष्यति, तर्हि अनवस्था स्यात्। संस्कृतिस्तु शासकानां स्वं न भवति, शिक्षकाणां वा। सा तु देशस्य स्वम्। शासकैरार्थिकं साहाय्यं विधेयं शिक्षाक्रमस्य, न शिक्षानीतिनिर्धारणं कर्तव्यम्। शिक्षकैश्च शिक्षिताः शासने समारोपणीयाः, न राजनीतिनिर्धारणं कल्पनीयम्। एवं परस्परं साहाय्यसम्पादनेन तैस्तैर्द्वौ पन्थानौ पृथक्पृथक्परिरक्षणीयौ।

कुशलाश्शासकाः, चतुराश्च शिक्षका देशस्य स्तम्भा इवेति पूर्वमवोचाम। स्तम्भाश्च पृथक्पृथङ् निकेतनस्य धारणं कार्यं कुर्वन्ति। स्वं स्वं कार्यमकुर्वन् स्तम्भः परत्र चेत्सम्बध्नाति तर्हि निकेतनस्य का स्थितिरापद्येत? सम्प्रतितने शिक्षाक्रमे भारतीयसंस्कृतिशिक्षणस्य प्रसङ्ग एव नोपलभ्यते। रामवद्वर्तितव्यं न रावणवत्; धर्मपुत्रवत् स्थातव्यं न दुर्योधनवत् इति शिक्षयितुमेव खलु रामायणभारतादिकं निर्मितं पूर्वजैः। सम्प्रति तु दक्षिण-

प्रान्ते रावणवद्वर्तितुमुपदिशन्तो भगवन्तं रामचन्द्रं निन्दन्ति। अस्य च परिणाममस्मदपत्यान्यनुभवेयुः। काममस्माकं प्रान्ता भिन्नाः, किन्तु देशस्य संस्कृतिस्त्वेकैव। तां प्रसारयितुं सर्वसाधारणी भाषा काचन साधनत्वेनावलम्बनीया। राज्यस्य कार्याणि यया कयाचन भाषया सञ्चाल्यन्ताम् संस्कृतेः प्रसारणाय संस्कृतमेव सर्वसाधारणमेष्टव्यं शिक्षाक्रमे। न हि संस्कृतं कञ्चन सम्प्रदायविशेषमवलम्ब्य प्रवृत्तम्। भारतस्य समग्रस्य गौरवं समेधयितुं संस्कृतमेव प्रधानं साधनम्। शिक्षाक्रमे संस्कृतमनिवार्यत्वेन ध्रियमाणं देशं समाजञ्च भूषयेन्न तु दूषयेत्। ( क्रमशः )

---

श्रीलकृष्णदासकविराजगोस्वामिप्रणीत-

## श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

श्रीचैतन्यचरितामृते मध्यलीलायां तृतीयः परिच्छेदः

[ पूर्वानुवृत्तः ]

स शैलशृङ्गादानीय कुञ्जेऽस्मिन्मां निगूह्य च।
ममासौ सेवकः पश्चान्म्लेच्छभीत्या पलायत ॥४१
तदा प्रभृति तिष्ठामि सुचिरं कुञ्जमध्यगः।
दिष्ट्यासि त्वं समायातोऽवहितो मां वहिर्नय ॥४२
इत्येवं कथयित्वैव तस्मिन् बाले तिरोहिते।
माधवेन्द्रपुरीस्वामी जाग्रदेव व्यचारयत् ॥४३

श्रीकृष्णोऽसौ मया दृष्टो नाभिज्ञातुं त्वशक्यत ।
इत्युक्त्वा न्यपतद्भूमौ प्रेमावेशवशेन सः ॥४४
कियच्चिरं रुदित्वैवं बभूव स्थिरमानसः ।
तदादेशमनुष्ठातुमालम्बे च धीरताम् ॥४५
प्रातः स्नातः पुरीस्वामी जगाम ग्राममन्तरा ।
तत्रैकत्र समाहूय जनान् वक्तुं प्रचक्रमे ॥४६
श्रीगोवर्धनधारीति युष्माकं ग्रामदेवता ।
कुञ्जे वर्तत आयातानेष्यामस्तं वहिस्ततः ॥४७
कुञ्जस्त्वतीव सान्द्रोऽयं प्रवेष्टुं नैव शक्यते ।
गृह्यन्तामवकाशाय कुद्दालाश्च कुठारकाः ॥४८
इत्याकर्ण्य जना हृष्टास्तेन सार्द्धं प्रतस्थिरे ।
कृत्वा कुञ्जं कृतद्वारं प्रविष्टास्ते यथासुखम् ॥४६
मृत्तृणाच्छादितं देवविग्रहं तं विलोक्य ते ।
आनन्देनाभवन् सर्वे विमूढा विस्मयेन च ॥५०
ततश्चावरणं दूरीकृत्य देवः प्रकाशितः ।
नासीच्चालयितुं शक्यः सुमहाभारविग्रहः ॥५१
महामहाबलिष्ठास्ते सममेतजनास्तदा ।
उद्गृह्यारोपयामासुस्तं देवं पर्वतोपरि ॥५२
ततः शिलामये सिंहासनेऽसावुपवेशितः ।
पृष्ठावलम्बनं दत्तं तस्यैकेन महाश्मना ॥५३
ब्राह्मणा ग्रामवास्तव्या उदूढैर्नूतनैर्घटैः ।
उत्पूतं वारि गोविन्दकुण्डादानिन्युरेकदा ॥५८
नव्यं घटशतं वारिपूर्णं तत्र समाहृतम् ।
भेर्यादीनि च वाद्यानि वादितानि स्त्रियो जगुः ॥५५
जगुर्वा ननृतुः केचिदेवमासीन्महोत्सवः ।
ग्रामोत्पन्नानि यावन्ति दधिदुग्धघृतानि च ॥५६

आमिक्षिकादिभोज्यानि सम्भृतानि ततस्ततः ।
विविधा उपहाराश्च शक्यन्ते नैव भाषितुम् ॥५७
तुलसीपुष्पवस्त्राणि सुबहून्यागतानि च ।
माधवेन्द्रपुरीस्वामी स्वयं तमभिषिक्तवान् ॥५८
दूरीकृत्याङ्गमालिन्यं स्नापयामास तञ्च सः ।
चिक्कणीकृतवानङ्गं बहुतैलैश्च मर्दयन् ॥५९
स्नपयन् पञ्चगव्यैस्तमादौ पञ्चामृतैस्ततः ।
अकारयन्महास्नानं घटानां शतकेन च ॥६०
पुनश्चकार तैलेन चिक्कणं श्रीकलेवरम् ।
शङ्ख-गङ्गोदकाभ्यां स ततः स्नानं समापयत ॥६१
मार्जयन् श्रीमदङ्गं स वसनं पर्यधापयत् ।
चन्दनं तुलसीं पुष्पमाल्यञ्चाङ्गे ददौ ततः ॥६२
धूपदीपादिभिर्नाना भोगैः स तमभोजयत् ।
यथाप्राप्तेन दध्ना च दुग्धेनामिक्षिकेण च ॥६३
स्वच्छं सुवासितं वारि निहितं नवभाजने ।
समर्प्याचमनं तस्मै ताम्बूलञ्च न्यवेदयत् ॥६४
ततो नीराजनं कृत्वा चकार बहुधा स्तवम् ।
प्रणम्य दण्डवद् भूमावात्मानं स समार्पयत् ॥६५

( क्रमशः )

---

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1·25; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 n.P ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 n.P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 n.P ·62 n.P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 n.P ; ·62 n.P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re, 1·25 ( for members ).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. ( for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs 4 ( for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 n.P ·62 n.P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., ·50 n.P

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4·50 n.P ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 n·P ; Re. 1·25 n.P ( for members ).

27. **Manavaka-gouravam**—(Drama) by M/M Kalipada Tarkacharya, Rs. 2·50 n.P and Rs. 2. (for members).

---

Vol. XXXXII. No. 11

४२श-वर्षस्य ११श संख्या

March 1960

१८८१ शकीये फाल्गुने मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4d

अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १९५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीतारामदासोङ्कारनाथचरणानां प्रधानाध्यक्ष्येण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहायकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्यपदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :— श्रीनिर्मलचन्द्रदासगुप्त-

३नं शम्भुनाथपण्डित ष्ट्रीट् श्रीनगेन्द्रनारायणचतुर्धुरीणयोः

कलिकाता-२० सम्पादकयोः

## तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )

डाः—श्रीनलिनीरञ्जनसेनगुप्त एम्-डि-महोदयः ( कार्यनिर्वाहकसभापतिः )

विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. वि-एल् ( पृष्ठपोषकः )

श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

---

Printed by Bishnupada Bhattacharyya M. A. Kavyatirtha, at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta—4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXXII. No. 11 | १८८१-शकीये फाल्गुने ४२श-वर्षस्य ११श-संख्या | March 1960.

## मतिमञ्जरी

### धर्मीय-शिक्षा।

[ निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः ]

लब्धस्वाधीनताके धर्मनिरपेक्षे भारतराष्ट्रे धर्मनामश्रवणेन राष्ट्रमर्य्यादाविच्युतिभिया सङ्कुचितनासिकैर्न भवितव्यं श्रीमद्भिः प्रेक्षावद्भिः। श्रूयतां श्रुतिशिखागीतिः—"धर्मो विश्वस्य जगतः प्रतिष्ठे"ति। न केवलं भारतवर्षस्य किन्तु विश्वस्यैव जगतः प्रतिष्ठापको धर्मः। न केवलमस्माकं शास्त्रेषु देवमूर्तेः पूजा विहिता, या खलु हठिकनिष्ठितब्रह्मविद्भ्यो न रोचते। "सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः"। "यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यती"त्यादिभिर्वाक्यसहस्रैरुच्चावचेषु सर्वत्रैव भगवद्दर्शनमुपदिष्टं शास्त्रेण। भूयश्च शास्त्रनामश्रवणेन रक्तनेत्रैः कम्पितकलेवरैर्वा न भवितव्यम्। तदेतच्छास्त्रं नागरिकरुचिप्रदं संविधानमेव।

पूजा तु मूर्तेरेव सम्भवति। उपासनायामाकृतिरपेक्षिता। सा चाकृतिर्हरिहरादीनां वा गुरोर्वा यथाभिप्रेता वा। अत एव पातञ्जलशास्त्रे "ईश्वरप्रणिधानमुक्त्वा "यथाभिमतध्यानाद्वे"ति प्रोक्तम्। 'ईश्वरस्य वाचकः प्रणव'

इत्यप्यभिहितम्, बौद्धराद्धान्तीयशून्यचिन्ता च सर्वथा निराकृतेति तत्र तत्रानुसन्धेयम्। सेयं प्रतीकोपासनावश्यं कर्तव्या ब्रह्मज्ञानपूर्वपर्य्यन्तम्। शिक्षाग्रहणं तु प्रथमे वयसि ब्रह्मचर्य्याश्रमवासिनाम्; तदानीं पाठाभ्यासेन सह प्रथमतः शौचसदाचारसभ्यभाषणसरलतादीनामभ्यासः करणीय एव। अन्यथाऽऽश्रमान्तरे दुर्गतिरपरिहार्य्यैव। या चाधुना नैतिकी शिक्षेति नाम्ना व्यपदिश्यते, सैव धर्मीयशिक्षा। सा शिक्षा बाल्यादेवाभ्यसनीया। तया चित्तस्य स्थैर्य्यं सम्पाद्यते। विद्यायाः स्वत एव विमला स्फूर्त्तिः सञ्जायते। चित्तं यावन्निर्मलं न स्यात् तावद् गृहीतापि विद्या न फलप्रसूर्भवेत्। इदमकार्य्यानुष्ठानं पापम्—इदं च सत्कर्मानुष्ठानं पुण्यमित्यादिभिर्विविधैर्वाक्यैर्बाल्यादेव पितरौ तत्तुल्या अन्ये वा यदि शिक्षयेयुर्बालान् तदा तेऽवश्यं साहसिकाः सत्यवादिनो दुर्णयपराङ्मुखा भविष्यन्ति। पूर्वं तावदस्माभिर्विविधपूजोत्सवादीनां मध्ये आनन्देन पाठाभ्यासः कृतः। विलासव्यसनस्य कापि कथा नासीदध्ययनकाले। अत एव पूर्वजा आदर्शचरित्रा वन्दनीयाश्चासन्। एवञ्च ते काकाच्चेष्टां वकाद् ध्यानं शुनो निद्रामन्येभ्यश्च विविधां शिक्षामस्मान् ग्राहितवन्तः। पित्रोर्गुरोः प्रकृतेः सर्वेभ्यश्चापरेभ्यः शिक्षा गृहीताभूत्। श्रूयतेऽधुना विद्यालयेषु मनुष्यव्यवहारशिक्षा प्रवर्त्यते। सा च तदानीं परिजनेभ्य एव गृहीताभूत्।

ये खलु सर्वेभ्यः सद्गुणान् संगृह्य शिक्षिता भवेयुस्ते जितेन्द्रिया जितक्रोधाः सुशीला दुर्णयप्रतिरोधकाः सत्साहसिनस्तेजस्विनश्च भविष्यन्त्येव। सर्वत्र यदि तर्के प्रवर्तेत, यदि हेतुवादमन्विष्येत, तदा शिक्षा कदा भवेत्। शिक्षा-ग्रहणात् परं तदनुरूपमाचरणं कर्तव्यं,—कृताचरणेन यदि फलं न लभ्येत,—तदा भवति जिज्ञासा कथं मे साधनं विफलं जातमित्येषा रीतिरध्ययनस्य। एषैव धर्मीयशिक्षा,—एषैव संविधानसूचितशिक्षा। अपि नागरिका धैर्य्येण विद्यामेवंक्रमेण सन्धारयिष्यन्ति? अथवा हास्यास्पदं धर्मीयशिक्षेति कृत्वा येन मार्गेण चल्यते तेनैवासन्मार्गेण भविष्यद्वंशीयान् चालयित्वा भारतस्य वैशिष्ट्यं नाशयिष्यन्ति? "महाजनो येन गतः स पन्थाः" इत्येषा वाणी नोपेक्ष्या। सज्जनानादर्शीकृत्य तदीयजीवनचित्रं पर्य्यालोच्य शास्त्रेण

सहैकवाक्यतां कृत्वा संसारमार्गे सञ्चरितव्यम्। इयमेव शिक्षा धर्मीया,—या जनान् दुर्बलान् नीतिभ्रष्टानकृत्वा सन्मार्गे प्रवर्तयति। पुत्रकन्यानां पितरः! सर्वैर्भवद्भिरवहितैश्चिन्त्यताम्—का शिक्षा कश्च पन्था इति। बहुशः परीक्षा विहिता। धर्मं विना शिक्षा च्छिन्नमूला। न मन्तव्यं धर्मीयशिक्षा न वैज्ञानिकान् चिकित्सकान् साहसिकान् योद्धॄन् वा विधातुं शक्नेति। योद्धृषु धर्मीयशिक्षाऽधुनाप्यस्त्येव। ते खलु विनेयाः साहसिनः कर्तव्यपरायणा मितभोजिनः। एतानि खलु फलानि धर्मीयशिक्षायाः। मनुष्योचितगुणगणै-रलङ्करणं फलं धर्मीयशिक्षायाः। निर्णयकालः समायातो मार्गस्य। भूयश्चोच्यते निर्णीयतां कर्तव्यं विचार्य्यतां च कः पन्था इति।

---

# कामतेश्वरीमन्दिरम्

[ निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः ]

आसीत् पुरा प्राचीनकामरूप-श्रीहट्ट-कोचविहारसहितोत्तरवङ्गीयांशविशेषः सुसमृद्धं प्रकृतेर्लीलानिकेतनम्। तेषु तेषु स्थानेषु मन्दिराणां स्थापत्य-शिल्पकला मन्दिरगात्राङ्किताक्षरमाला विच्छिन्नपतिताः शिलालिपयो भूगर्भान्निधिवदाविष्कृतानि शिल्पसौष्ठवचरमकाष्ठानिदर्शनानि शिलामूर्ति-खड्ग-प्रभृतीनि चैतिहासिकसाक्षिभूतानि प्रमापयन्ति स्थानस्य वैशिष्ट्यं माहात्म्यं च। सौभाग्यात् प्रत्यक्षीकृतान्यस्माभिरधुना कोचविहारमण्डलान्तर्गते कामतापुरे ( कान्तापुरे ) साम्प्रतं गोसानी ( मारि ) नामकस्थाने कामतेश्वरीमन्दिरं कियद्दूरावस्थितानि "राजपाट-टेकशाला"दीनि च। कौतूहलात् तथ्यानुसन्धान-प्रवृत्तैरस्माभिः कोचविहारस्येतिवृत्तं प्रचलितजनश्रुतिश्च प्रधानोपजीव्यत्वेन समवलम्बितानि। प्रस्तरफलकाङ्किता दुर्गामूर्तिरेवाधुना कामतेश्वरीत्वेन

परिचिता। अस्पष्टायाश्चापि मूर्तेर्मनोहारित्वं नापगतम्। किंवदन्ती चैषा कामतेश्वरी कवचविशेषरूपा। दस्युभिरपहृतं तत्कवचं कियद्भ्य वत्सरेभ्य पूर्वम्। विधृता अपि दस्यवो राजदण्डं न प्राप्तवन्तः। ते खलु दैवदण्डेन निष्कृतिं लब्धवन्तः। पुरा किल प्राग्ज्योतिषपुरा ( कामरूपा )धिपतौ भगदत्ते निहते भारतयुद्धे तद्दक्षिणाकरस्थितं कवचं संग्रामभूमौ निपतितम्। कामेश्वरराजवंशीयभूपालश्चक्रध्वजः स्वप्नादिष्टः संगृह्य तदयत्नापतितं कवचं कामतापुराभिधायां स्वराजधान्यां स्थापयामास। गोसानीमङ्गलाभिधग्रन्थे च स्फटिक कुडाख्यजलाशयस्य तटावनौ कस्यचिच्छाल्मलीवृक्षस्याधस्तादासीत् प्रोथितमिदं कवचम्। कान्तेश्वरो राजचक्रवर्ती "मधुजालि"-नामधेयस्य कस्यचिच्चण्डालस्य साहाय्येन तदेतत् कवचं लब्धवानिति वर्णितमस्ति। चक्रध्वजप्रतिष्ठितं कामतेश्वरीमन्दिरं क्व प्रतिष्ठितमासीत् तदेतदशक्यनिरूपणमिदानीम्। कामतापुरराजधान्या दुर्गस्य च ध्वंसावशेषोऽधुनापि वहति प्राचीनमैतिह्यम्। समाकर्षति चानुसन्धित्सूनां चेतांसि शतार्धहस्तपरिमितोन्नतं चतुर्दिक्षु प्रायाहस्तशतत्रयप्रस्थपरिमितं "राजपाट"नामधेयं स्थानम्। तत्र च बह्वीषु पाषाणमूर्तिषु षट्संख्यका मूर्तयः कथञ्चिद्विज्ञाताः।

(१) बालकृष्णमूर्तिः रोहिणीयशोदयोः कण्ठे हस्तद्वयं निधाय तयोर्जानूपरिभागे दण्डायमाना।

(२) नागदेहोपरि काचन स्त्रीमूर्तिः पार्श्वे नारायणमूर्तिश्च।

(३) रामलक्ष्मणमूर्तिः—धनुर्धारिणौ रामलक्ष्मणौ तत्राङ्कितौ।

(४) गौरीपीठेन सह सदाशिवमूर्तिः। (५) हरपार्वतीमूर्तिश्चेति।

(६) पथचारिणोर्द्वयोः कयोश्चिन्मूर्तिर्न विस्पष्टं परिज्ञाता। उदूखलमेकं चतुर्हस्तमितं च प्रस्तरनिर्मितमवलोकितम्।

निवसति कश्चिदत्र सन्नयासीत्याकर्ण्यान्विष्य च तस्योटजमात्रमपश्यं न सन्नयासिनम्। लोकालयाद् दूरवर्तितया न तस्य वार्ता काचित् कस्मादप्यधिगता। बहिरन्तश्च प्राकारस्य द्वे परिखे आस्तामिति स्थानदर्शनादनुमितम्। विस्तारश्च परिखयोः सार्धद्विशतहस्तात् पञ्चशतहस्तपरिमितमित्यप्यनु-

मातुं शक्यते। प्राकाराभ्यन्तरे विविधदेशिकक्रोडाया निदर्शनमधुनापि तस्य महिमानं द्योतयति। अनुसन्धित्सुभिरत्र प्रत्नतत्त्वस्य सामग्री लप्स्यत इति निर्विवादम्। पुरावृत्ते कामतेश्वरीमन्दिरमधिकृत्य लिखितं पञ्चषष्ट्यधिकषोडश-शततमखृष्टाब्दे कोचविहारमहाराजेन प्राणनारायणेन मन्दिरमिदं विनिर्मितम्। तदानीं तत्र मूर्तिप्रतिष्ठाया वार्तापि नोपलभ्यते, उपलभ्यते च कवचप्रतिष्ठा-संदेशः। मन्दिरस्य "वडदेउरी" संज्ञकाः पूजकाः कथयन्ति स्म, कवचमिदं रजतनिर्मिते कोष्ठे वद्धं विराजते। उपरि च कोष्ठस्य भगवतीमूर्त्तिरङ्किता वर्तते। कवचमभ्यन्तरस्थितं न केनापि दृष्टपूर्वं पूजकैरस्माभिरपि न दृष्टमिति।

श्रूयते मुघलैर्विध्वस्तीकृते मन्दिरे निक्षिप्ता कामतेश्वरी समीपवर्त्तिनि "काजलीकुडा"नाम-सरसि। "भुना"-नामधेयः कश्चन धीवरस्तत्र सरसि मत्स्या-हरणाय जालं निक्षिप्य तदुत्तोलयितुमसमर्थो जातः। तस्यामेव रजन्यां जालबद्धया कामतेश्वर्या स्वप्ने समादिष्टो राजा प्राणनारायणः केनचिद् ब्राह्मणेन जालवद्धां कवचरूपिणीं तामुत्ताल्य हस्तिपृष्ठे समस्थापयत्। यत्र च हस्ती स्वेच्छया विश्रामाय दण्डायमानः स्थितस्तत्रैवेदं कामतेश्वरीमन्दिरं निर्मितम्। विध्वस्त-कामतेश्वरीमन्दिरस्य खड्गः सिङ्गिमारी-नद्या भग्नस्थानाल्लब्धोऽधुना मन्दिरेऽस्मिन् संरक्षितो वर्तते।

प्राचीनवङ्गाक्षराङ्कितमन्दिरद्वारदेशस्थितशिलालिपितो ज्ञायते मन्दिरमिदं सप्ताशीत्यधिकपञ्चदशशततमशकाब्दे महाराजेन प्राणनामकेन विनिर्मितमिति। शिलालिपि-श्चैषा,—

ॐ नमो गणेशाय

सम्मत्या द्विषदेकजित्वरभुजादण्डप्रतापार्ग्यम-
क्रीडाकन्दुकवेगवर्धितदिशः श्रीप्राणभूमिपतेः।
शाकाब्दे नगनागमार्गणहिमज्योतिर्मिते निर्मितः
श्रीभाजा कविमण्डलेन भजता भव्यो भवानीमठः॥

१५८७"

गौहाटीतो राजधानीं कामतापुरे स्थानान्तरे सञ्चार्य्य महाराजो नीलध्वजस्तत्र बहून् मैथिलान् ब्राह्मणान् संस्थाप्य च "ब्राह्मणराज्य"मिति नाम दत्तवान्। महाराजेन च प्राणनारायणेन तेष्वेव केनचिन्मैथिलब्राह्मणेन कवचमुद्वार्य्य संस्थापयामास। ततः प्रभृति प्राप्तभूसम्पत्तिकास्त एव मैथिला ब्राह्मणा "देउरी"त्याख्यां लब्ध्वा प्राणनारायणप्रदत्तं देवलाकृतमुपभुञ्जते। अधुना तैरेव धनिभिर्ब्राह्मणद्वारा पूजा निर्वर्त्यते। कोचविहारराजसम्पदो यदत्यल्पपरिमितद्रव्यं दीयते, तेनैव कृच्छ्रेण पूजादिकं चलतीति विज्ञातम्।

अस्य मन्दिरस्य पुरोभागे विद्यते किञ्चिद् होमकुण्डम्। यत्र तिथिविशेषेऽधुनापि तोलकमित-घृतेनाहुतिः प्रदीयते। मन्दिराभ्यन्तरे देवीसिंहासनस्योत्तराहि सूर्य्यमूर्तिरन्यस्मिन् काष्ठाधारे सज्जीकृतान् महादेव-नारायण-गोपाल-प्रजापति-विग्रहांश्च संमार्ज्य पूजकं श्रद्धया संस्थापयन्तमपश्यम्। बहिश्च मूलमन्दिरस्यैशान्यां दिशीशानीसहितं पशुपतिमाग्नेय्यां महादेव-सहित-लक्ष्मी-नारायणं नैरृत्यां तारकेश्वराभिधं शिवलिङ्गमेकैकस्मिन्नुपमन्दिरं स्थितान्यपश्यम्। वायुकोणे "दोलभिटा"ख्यं स्थानं वर्तते।

सोऽयं प्राणनारायणो भूपालो बहूनि देवमन्दिराणि संस्थाप्य ब्राह्मणेभ्यो भूसम्पदं प्रदाय संस्कृतशिक्षायाः प्रसाराय प्रचाराय च व्याकरणादिशास्त्राणां टीकां विरचय्य च मर्त्यलोकेऽप्यमरो जातः। संस्कृतभाषाया व्याकरणे साहित्ये स्मृति-शास्त्रे च तस्य प्रगाढा व्युत्पत्तिरासीत्। सङ्गीतशास्त्रे तद्विरचितं किञ्चन ग्रन्थरत्नमासीत् यत्साहाय्यकेन राग-ताल-मान-लयप्रभृतिषु ज्ञानलाभः सुकरः। अतीव दुःखकारणमीदृशमपि ग्रन्थरत्नं दग्धं गृहदाहेनेति। तस्य पाण्डित्येन विमुग्धहृदयो महाराष्ट्रपण्डितो जगन्नाथः प्राणाभरणं काव्यं व्यरचयत्। विद्वद्वर्य्येण जगन्नाथेन तदादिष्टेन "प्रयोगरत्नमाला" व्याकरणस्य "प्रभाप्रकाशिका" नाम टीका विरचिता। स्पष्टं टीकामुखबन्धे,—

"आनन्दस्यन्दमन्दीकृतमधुकविताकल्पनाकेलिशालि-
प्रज्ञावज्ञातवाचस्पतिरतुलगुणग्रामविश्रामधाम।

पाणिप्रद्योतमानामलकफलतुलालम्बिताशेषविद्यः
श्रीश्रीमत्प्राणदेवः क्षितिपतितिलकः कामकल्पेव भाति ॥४॥

धैर्य्यसौन्दर्यविक्रान्तिदानसत्कीर्तिवारिधेः ।
गुणिकल्पतरोरस्य राज्ञः प्रीतिनिदेशनात् ॥५॥

बोधाय बालकानां हित्वा तर्कातिसम्पर्कम् ।
श्रीजयकृष्णः कुरुते व्याख्यानं रत्नमालायाः ॥६॥

कदाचित् सोऽयं प्राणनारायणश्चन्द्रग्रहणकाले शिरोमणिभट्टाचार्य्योपाधि-विभूषिताय विदुषे ब्राह्मणाय काञ्चिद् भूसम्पदं दत्तवान्। तदेतद्दानपत्रं प्राचीनमैथिलवर्णमालया संस्कृतभाषया च लिखितमद्यापि कोचविहाररराजप्रासाद-कोषागारे रक्षितं वर्तते। कौतूहलविनिवृत्तये पाठकानां तद्दानपत्रस्यानु-लिपिरधस्तात् प्रकाश्यते।

( सिंहचिह्नाङ्कितम् )

( अस्पष्टं कस्यापि स्वाक्षरम् )

श्रीविष्णवे—८

प्राणनारायणो नृपः—८

ॐस्वस्ति निजभुजमन्दाराद्रिमथितारातिसमुद्रसञ्जनितयशश्चन्द्र-कामतेश्वर-श्रीश्रीप्राणनारायणमहीमण्डलाखण्डलानाम्—

श्रीनरहरिभाण्डारठाकुरश्रीरामनाथमजुन्दारान् प्रति समावेशः चन्द्रोपरागे श्रीम······स (ख)हस्तेषु ग्राममेकं दत्तवान्।

श्रीशिरोमणिनाम्नेऽस्मै भट्टाचार्य्याय धीमते ।
ददाविमं महीपाल उत्तरप्रतिपत्तितः ॥

अपरब्रह्मोत्तरवसोहितश्चानारिशालिभिः। स्वे (ख)यमपि देयो ग्रामो युष्मा(स्म)-भिर्द्दमराधिकृतैश्च। घरसुति दोश्रानदो मुनीशापऽन ग्राह्याः कदापि केनापि। जलकरपश्चम्नादिर्भोग्योनेनाकुतोभयतः।

मत्कुलप्रभवाश्चान्ये ये भविष्यन्ति भूभुजः ।
हत्वा ब्रह्मोत्तरं ग्रामं ते स्युर्गोशूकराशिनः ॥

... ... ... ... ... ... ...

( पृष्ठान्तरे ) श्रीकविकर्णपूरखासनीसस्य ।

महाराजस्य प्राणनारायणस्य कालोऽयमेतद्देशे स्वर्णयुगत्वेन प्रसिद्धिं प्राप्तः । तस्य सहोदराऽपि रूपमती देवी नेपालमल्लवंशीयचत्वराज-प्रतापमल्लमहिषी धर्मपरायणा सहोदर इव सर्वसद्गुणमण्डिता देवे द्विजे च भक्तिसम्पन्ना सदा-दर्शचारित्रा पञ्चाशीत्यधिकसप्तशततमनेपालसंवदब्देऽनन्तपुरे उग्रतारायाः काठमाण्डुराजधान्यां प्रासादचत्वरपश्चिमदिग्भागे श्रीविष्णोश्च मन्दिरं ( १६५६ खृः ) प्रतिष्ठापयामास । राजकुमारी रूपमती देवी राज्ञः प्रतापमल्लस्य पट्टमहिषी कर्णाटराजदुहिता राजमती च तस्यैव राज्ञः प्रणयिनीत्येतत् सर्वं शिलालिपिरेव विशदयिष्यति ।—

नेपालस्थविष्णुमन्दिरस्य शिलालेखः—

सेयं रूपमती सती गुणवती स्वर्णद्युतिः सन्मति-
र्मायत्कुञ्जरगामिनी प्रणयिनी साक्षात् परा रुक्मिणी ।
आसीत् सर्वगुणस्थितेर्नरपतेः श्रीमत्प्रतापस्य सा
पत्नी प्राणसमा यथा जलनिधेः पुत्री जगत्पायिनः ॥६॥
कर्णाटी रङ्गघाटी कुचकनकघटी कामलीलैकवाटी
स्वर्णालङ्कारकोटी हरिसदृशकटी चारुदेहानुपाटी ।
नाम्ना राजमती महारसवती भूपप्रतापस्य सा
भूता भोगवधूटिका किल हरेर्भामेव जीवाधिका ॥६॥

संवत ७६१ फाल्गुनशुक्लषष्ठ्यां तिथौ अनुराधा-
नक्षत्रे बृहस्पतिवासरे ।

उग्रतारामन्दिरस्य शिलालेखः,—

नेपाले सस्वतेत ? शरगिरिमुनिभिस्संयुते शुक्लपक्षे
चाषाढे वै नवम्यां सुललितदिवसे योगराजे शिवाख्ये ।
चित्रायां शुक्रवारे जननयनहरेऽनन्तरेऽनन्तपूरे [ सुरम्ये ? ]
ताराया उग्रपूर्व्याः कृतमघहरणं स्थापनं राजपत्न्या ॥१॥

या पत्नी श्रीप्रतापक्षितिपतितिलकस्यानुरूपा सुरूपा
यैषा वङ्गाधिपस्य प्रवलरिपुहरस्याद्वितीया सुकन्या ।
सैषानन्तप्रियाख्या त्रिभुवनविदिता रूपपुण्याभिजात्यै-
प्प्रासादस्य प्रतिष्ठां सुरनरसुभगां दिव्यलग्ने विदध्यात् ॥२॥

तदेषा कामरूपीयसभ्यता न केवलं नेपाले यावदपि तु समग्रे भारतभूखण्डे लब्धप्रसराऽऽसीत् ।

सर्वथा यद्यप्यस्माभिरनुमातुमेव शक्यते शिलालिपि-दानपत्रादितो यत तदानीं संस्कृतभाषा कामरूपसभ्यतानुगते देशे राष्ट्रभाषासीत् तथापि प्राणनारायणजीवनवृत्तपर्य्यालोचनया स्पष्टं विज्ञायते यदधस्तनकर्मकरेभ्यः प्रभृति सूच्च-पदाधिष्ठिताः सर्वे सभासदः संस्कृतभाषाभाषिणः संस्कृतभाषयैव राजकार्य्यं निर्वाहयन्ति स्म । अत एव "राजखण्डं" नाम राजवंशोयेतिहासोऽपि संस्कृत-भाषयैव विरचितो राजादेशेन । श्रीनाथनामा कश्चन ब्राह्मणो महाराजस्य प्राणनारायणस्यादेशेन "विश्वसिंहचरित्रं" नाम ग्रन्थं प्रणीतवान् । तस्यासम्पूर्णा लिखिता काचन पाण्डुलिपिरधुनाविष्कृता । कोचविहारमहाराजग्रन्थागारस्य हस्तलिखितप्राचीनग्रन्थानां विवरणसूचीप्रणयनकालेऽस्माभिर्बहुशः श्रीनाथपण्डितस्य परिचयो लब्धः । अस्यैव प्राणनाथस्य राजसभायां विक्रमादित्यस्य नवरत्नसभेव पञ्चरत्नसभाऽऽसीत् । पञ्च पण्डितप्रकाण्डास्तदानीमेतद्देशे संस्कृतप्रचाराय कृतप्रयत्ना बभूवुः । येषां पाण्डित्यनिदर्शनं संक्षेपत उपरिलिखितश्लोकमालासु दृश्यते ।

अस्माभिरपरिज्ञाते देशे संस्कृतभाषाया यादृशः समादरो दृष्टस्तेनानायासेनानुमातुं शक्यते कदाचित् संस्कृतभाषा समग्रस्य भारतवर्षस्य राष्ट्रभाषाऽऽसीदिति । स एष देशो जयतु । यत्र संस्कृतभाषया राजकार्य्यं परिचालितमभूत् कदाचित् ।

अधुना तु कामतेश्वरीदेव्याः पूजासेवादिकार्य्यं न सुष्ठु चलति । गोसानीजनपदे यैषा कामतेश्वरी जाग्रन्मूर्तिरूपेण जनमनःसु सिंहासनं स्थापितवती

सा कदापि क्षीणप्रभा न भविष्यतीति सत्यम्, किन्तु राजनियन्त्रिते मन्दिरे यथा राजपुरुषैः समधिकसमादरेण व्यवस्था क्रियेत तदर्थं तेषां दृष्टिः समाकृष्यते ।

सुसमृद्धमेतत् प्रकृतेर्लीलानिकेतनं यथाऽतिरमणीयं स्यात् तदर्थं देवीपादमूले प्रार्थ्यते :—

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ।
स्वयं गृहाण सेवां त्वं भक्त्या भक्तैः प्रकल्पिताम् ॥

साहित्यसाधनायां मुक्तिक्षेत्रत्वेन भोगसम्पादकत्वेन चेदानीमपि वैशिष्ट्यं वर्तते भारतभूम्याः । तदत्र कृपावती शक्तिरूपिणी कुत्राविर्भूय करुणां प्रयच्छति न तज् ज्ञायते, किन्तु यादृशी बहिर्मुखताऽस्मासु लब्धास्पदा तन्निवारणार्थं शक्तिरूपां तामेव पुनः पुनः स्मरामस्तथा प्रणमामः ;—

सर्वस्वरूपे ! सर्वेशे ! सर्वशक्तिसमन्विते !
भयेभ्यस्त्राहि नो देवि ! दुर्गे ! मातर्नमोऽस्तु ते ॥
दुर्णयेभ्यो जनान् रक्ष मतिं सत्ये प्रवर्तय ।
स्वाधीनतां नवप्राप्तां सामर्थ्यं देहि रक्षितुम् ॥
सर्वे ते सुखिनः सन्तु सर्वे स्युः सत्यभाषिणः ।
भद्रं यच्छ जगन्मातर्दुष्टां बुद्धिं निवर्त्तय ॥

---

राजस्थानसंस्कृतसाहित्यसम्मेलनस्य भीलवाड़ाधिवेशने तदीयशिक्षापरिषदध्यक्ष-
परिडतप्रवर-ब्रह्मश्री-**पट्टाभिरामशास्त्रि**-शास्त्ररत्नाकर-
विद्यासागर-मीमांसान्यायसाहित्याचार्य्याणाम्

# अभिभाषणम्

( पूर्वानुवृत्तम् )

संस्कृतं मधुरं सरसं सरलञ्च भवतीति सर्वसम्प्रतिपन्नमिदम् । ओजसा गुणेन संयुतं संस्कृतमवश्यं कठिनमिव, किन्तु तदेव यदा माधुर्येण प्रसादेन च

सम्बद्धं भवति तदाऽत्यन्तं सरलमेव प्रतीयेत। भवतु सरलं सरसञ्च, किन्तु तदध्ययनं निष्प्रयोजनम्। न हि संस्कृतं द्वितीयं पुरुषार्थ-मुपलम्भयति। कथमिदमनिवार्यतयाऽधीयतामिति प्रष्टारो भवन्ति। अर्थोपार्जनमेवैकं प्रयोजनमुद्दिश्य नाध्येतव्यं भवति, केनचिदध्ययनेन विनापि प्रभूतं धनमर्जयितुं शक्यते। न हि बाल्यावस्थायामध्याप्यमाना विषयास्सर्वेऽपि द्वितीय-पुरुषार्थ-सम्पादका भवन्ति। आङ्गलानां शासनसमये तैर्विद्याध्ययनस्य प्राचीनं मुख्यं प्रयोजनं परिवर्तितम्। कार्य्यालयेषु कार्याणां सञ्चालनायैव तैर्विद्यालयाः प्रवर्तिताः। विद्यालयेभ्यो निर्गताः स्नातकाः तेषां कार्य्यालयेषु प्रविशन्ति स्म। नेयं रीतिः प्रशस्ता परिगणयितुं शक्यते। विद्याध्ययनस्य मुख्यं फलं ज्ञानलाभः। तत्र च संस्कृतमनुपयुक्तमिति कथनं दोषाय स्यात्। संस्कृतवाङ्मयं समग्रं यदि परिशीलयामो वयम्, तर्हीदं स्पष्टं परिज्ञायेत, यत्तदानीं कियान् संस्कृतस्याध्ययनाध्यापनव्यापार आसीदिति। तस्य सहस्रांशानामेकतमोऽप्यंशोऽद्य नास्तीति वक्तव्यमापतति। संस्कृतं भारतीयानां स्वं वर्तते। स्वीयं स्वं स्वेन रक्षणीयमिति हि न्याय्यः पन्थाः। रक्षणञ्चा-स्याध्ययनाध्यापनव्यापारेणैव सिध्यति। स्वतो न प्रवर्तन्तां लोकास्तदध्ययने, परमधिकारिभिर्देशस्य गौरवमोहमानैर्निर्बन्धनीयास्ते तदध्ययने। स्वतन्त्रभारते शक्तिसम्पन्ना अपि वयं यद्यस्मिन्विषये जोष-मास्महे तर्हि नूनमचिरात्संस्कृतं नामावशिष्टमेव स्यात्। चिरन्तनात्कालादागतं भारतस्य गौरवमपहृतं भवेत्। अपहृत-गौरवे भारते स्थिति-रप्यस्माकमजागलस्तनसदृशी स्यात्।

अपूर्वेण केनचन व्याधिनाऽधुना ग्रस्तास्सन्ति भारतीयाः। द्वित्रवयस्का एव शिशवः तेषु विद्यालयेषु प्रेष्यन्ते ये प्राया विदेशीयैः ख्रिस्तमता-वलम्बिभिः परिचाल्यन्ते। एकैकस्य शिशोः कृते प्रतिमासं प्रभूतस्य वित्तस्य व्ययो भवति। शिशून् सावधानं ते परिरक्षन्तीति सत्यम्। परं तेषां मुख्यमुद्दश्यं किमिति पर्यालोच्यमाने न निगूढमिदं समेषाम्—यद्वेषेण नेपथ्येन व्यवहारेणाचारेण संस्कृत्या च स्वमतानुरागिण इमे कर्तव्या इति। बिम्बोष्ठ्यः, उरःकञ्चुकधारिण्यः, कर्तितकेशाः, 'कीचीकूची'ति व्यवहरन्त्यो युवत्यश्शिशून्

बालान् बालिकाश्च शिक्षयन्ति। शिक्षापि तेषु विद्यालयेषु प्राधान्येन प्रथममाङ्गलभाषायाः, प्रान्तीयभाषाया राष्ट्रभाषाया वा, गणितस्य, स्वमत-सिद्धान्तस्य च भवति। बाल्यावस्थायां बालानां हृदयेषु समारोप्यमाणं वस्तु कालान्तरे स्वस्वानुरूपं फलेदिति प्रत्यक्षमिदम्। स्वकीयां संस्कृतिं देशान्तरेऽपि प्रसारयितुं कृतोद्यमास्ते। वयन्तु स्वदेशेऽपि स्वीयां संस्कृतिं शिक्षयितुं संकुचितमतयस्स्मः। इमे हि नगरेष्वेव स्वीयं जालं प्रसारयन्तीति न, किन्तु ग्रामे ग्रामे पर्यट्य तत्रापि निराबाधं जालं प्रसारयन्तो दृश्यन्ते। धारेयमस्माभिः भारते जनिमास्थितवद्भिरवश्यं निरोद्धव्या। भारतमातु-रपत्यानि व्याधेरस्माद्रक्षणीयानि। पुरुषास्तु कर्तितकेशा अभूवन्नेव, किन्तु नारीणामपि तथाभावो यथा न भवेत्तथाऽस्माभिर्विधेयमेव।

अधुनाऽस्मदपत्यानि पूर्वजानां नामान्यपि न जानते दूरे च तेषां चरित्रम्। ये हि देशस्यार्थे त्यागैकजीवना अभवन्, यदधीनं भारतस्य गौरवमवलम्बित-मासीत्, येषाञ्च रुधिरमस्मच्छरीरेषु प्रवहति, ते हि नामात्रिभृगुकुत्सवसिष्ठ प्रभृतयो महापुरुषा विस्मृता अस्मदपत्यैः। परं चित्रपटेष्वभिनेतारः अभिनेत्र्यश्च सविशेषं स्मर्यन्ते। लौहकन्दुकस्य पादकन्दुकस्य च क्रीडने प्रसिद्धानां जयसिंह-पंकजराय-ओनील-आरवीप्रभृतीनां नामानि न विस्मरन्ति ते। प्रत्यक्षमस्माभिरनुभूयते—यदिमे क्रीडाङ्गने समुचितं स्थानं लब्धुं प्रातरुणाकस्य समये समुत्थाय पाथेयञ्च परिगृह्य गृहात्प्रस्थिता भवन्ति, सूर्यास्तादनन्तरं गृहान् प्रति निवर्तन्ते। तत्रैव भोजनं जलमलादीनामुत्सर्जन-मपि। क्रीडाङ्गने सूचिका-निपतनस्याप्यवकाशो न भवति, जलं मलं वोत्स्रष्टुं कथमन्यत्र गन्तुं पारयेयुस्तपस्विनः, गत्वा वा 'पुनस्तत्स्थानं कथं लभेरन्'? कथं वा क्रीडनप्रबन्धका एतावतो जनसमूहस्य स्थानानि परिकल्पयेयुः? प्रथमं स्वास्थ्यं गतं बालानाम् आचारो गता व्यवहारश्च। सत्यमुक्तं श्रीशंकरभगवत्पादैः—'पश्वादिभिश्चाविशेषात्' इति। एवं वदतो मे नायमभिप्रायः—चित्रपटदर्शनं न कर्तव्यम्, कन्दुकक्रीडनं न विलोकनायम् इति। विंशतितमेऽस्मिन् शतके बालानां कर्णविवरेषु शब्दा इमे न प्रविशेयुः,

प्रविशन्तो वाऽर्थं नावबोधयेयुः, अवबुद्धमप्यर्थं लोका न परिगणयेयुः। केवलं विडम्बनैव स्यात्। किन्तु पशुतुल्यताया अपाकरणे यत्नः कर्तव्य एव।

( क्रमशः

---

# श्रीचैतन्यचरितामृतस्य संस्कृतानुवादः

अनुवादकः—श्रीभास्करानन्दसरस्वतीस्वामी

श्रीचैतन्यचरितामृते मध्यलीलायां तृतीयः परिच्छेदः

[ पूर्वानुवृत्तः ]

शालितण्डुलगोधूमचूर्णैर्ग्रामात् समाहृतैः।
निवेदितैश्च तैः सर्वैः पूर्णोऽभूत् स च पर्वतः॥ ६६
मृद्भाजनानि यान्यासन् कुम्भकारस्य वेश्मनि।
तैः समस्तैः समानीतैरारब्धं रन्धनं प्रगे॥ ६७
अन्नं राशीकृतं तत्र पचद्भिर्दशभिर्द्विजैः।
चतुष्पञ्चैर्जनैः सूपव्यञ्जनादि च रन्धितम्॥ ६८
वन्यैः शाकैः फलैर्मूलैर्व्यञ्जनं बहुधा कृतम्।
केचन ब्राह्मणाश्चक्रुर्वटिकावटकान् बहून्॥ ६९
पञ्चसप्त जनाः पौलीन् कृतवन्तश्च राशिशः।
सर्पिराप्लुतमेवासीदोदनव्यञ्जनादिकम्॥ ७०
पातिते नूतने वस्त्रे पलाशच्छदनावृते।
पाचं पाचञ्च भक्तानि तत्र राशीकृतानि च॥७१

क्षुद्रोऽद्रिरिव तत्पार्श्वे पौलिराशिरशोभत ।
सूपव्यञ्जनपात्राणि स्थापितानि समन्ततः ॥ ७२

पार्श्वे शिखरिणीदुग्धं मथितं दधि चाहितम् ।
पायसं नवनीतञ्च सरश्चासंस्तदन्तिके ॥ ७३

इत्थं सुसज्जितं कुर्वन्नन्नकूटं मनोरमम् ।
श्रीमाधवपुरीस्वामी गोपालाय न्यवेदयत् ॥ ७३

घटैर्बहुभिरापूर्य्य ददौ वारि सुवासितम् ।
क्षुधया चिरवर्तिन्या गोपालो बुभुजेऽखिलम् ॥ ७५

सर्वव्यञ्जनमन्नञ्च गोपाले भुक्तवत्यपि ।
तस्यैव श्रीकरस्पर्शादभवत्तत्तथा पुनः ॥ ७६

इति माधवगोस्वामी तत् साक्षादनुभूतवान् ।
गोपालस्य ततः किञ्चिन्नैव गोप्यमवर्तत ॥ ७७

ऐकाह्निकेन यत्नेन कृतस्तादृङ्महोत्सवः ।
श्रीगोपालस्य माहात्म्यादित्यन्ये नाविदुर्जनाः ॥ ७८

तत आचामयन् स्वामी ददौ ताम्बूलवीटिकाम् ।
कुर्वत्यारात्रिकं तस्मिँल्लोकाश्चक्रुर्जयध्वनिम् ॥ ७९

नवं पर्य्यङ्कमानीय शय्यां सोऽस्मिन्नकल्पयत् ।
पुरीस्वामी नवं वासस्तत्रैवास्तृतवान् पुनः ॥ ८०

तृणपर्णैर्वृतिं बद्ध्वा दिशः सर्वाः समावृणोत् ।
ऊर्द्ध्वमप्येकयावृत्या स आच्छादितवांस्ततः ॥ ८१

आज्ञापयत् पुरीस्वामी सकलान् ब्राह्मणान् पुनः ।
सर्वान् भाजयताबालवृद्धं ग्रामजनानिति ॥ ८२

तत्रागत्योपविष्टास्ते भुक्तवन्तो यथाक्रमम् ।
भोजिता ब्राह्मणा आदौ ब्राह्मण्यस्तदनन्तरम् ॥ ८३

( क्रमशः

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

ध्यानप्रकाशः परिचिन्त्य चैवं
सुहृद्भिरन्यैरखिलं विचार्य्य ।
वैद्यं प्रवीणं त्वरितं जुहाव
प्रचक्रमे चाथ चिकित्सितुं सः ॥३१

तदीयभैषज्यनिषेवणेन
प्रशान्तिमीषत् प्रगतोऽपि रोगः ।
स्वल्पेन कालेन पुनः प्रवृद्धा
हविःप्रसेकेन यथा मखाग्निः ॥३२

पर्य्याकुलाः शिष्यगणा बभूवु-
र्गुरुर्विवेकी स्थिर एव वृत्तः ।
स व्याकुलान् शिष्यगणान् समीक्ष्य
प्रोवाच तान् सान्त्वयितुं शमेन ॥

वत्साः ! प्रपश्यामि रुजा ममार्त्तान्
युष्मान् भयेनाकुलतामुपेतान् ।
भयं परित्यज्य शमं लभध्वं
भयानुवृत्तिर्महतां न धर्मः ॥३४

भयेन बुद्धिः प्रतियात्यशुद्धिं
भयेन जागर्त्ति नितान्तजाड्यम् ।
भयं विधेयाध्वनि वैरिभूतं
भयस्य वश्यः किल हीनसङ्गः ॥३५

...ra
...
...by Pt.
...1.
...-Edited
Rs. 5.
Bhatta-
...bhushan.

...dited by Pt.
...t of stock.)
...dited by Pt.
...; ·75 n.P ( for

...—Edited by Pt.

...acharya—Edited
..., Ph. D. Re. 1·50;

...a Bhattacharya—
...hushana. ·88 n.P

...ara—Edited by
...Vedantavisharada
...or members ).
...ttacharya—Edited
...n.P (for members).
...f Lakshmanasena
...akravarti, M. A.

भयेन कृत्याद् विनिवृत्तिमाप्तः
स्वाभीष्टलाभेन विनाकृतः स्यात् ।
विहाय तस्मादिह भीतिजाड्यं
स्वकृत्यमार्गे हृदयं निधत्त ॥३६

फलानुसन्धानमृते सुधीरः
कृत्यं दधानो नहि दुःखमेति ।
हितं न चेन्नास्तु फलं ततः किं
फलं विधेयं यदहितं ततः किम् ॥३७

सुखञ्च दुःखञ्च समे विभाव्य
त जयाजयौ लाभमथाप्यलाभम् ।
इति कृत्ये प्रवृत्तिर्महता विधेया
गोपा गीतार्थसारः परमो हितोऽयम् ॥३८

ऐका क्रमेण वृद्धिं गतया रुजा मे
श्रीगोप यज्जीवनापायमिहोन्नयन्तः ।
तत अ यूयं विषादं विपुलं वृणीध्वे
कुर्वत्या नैव प्रशंसन्ति तदप्यभिज्ञाः ॥३९

नवं प कालं कियन्तं स्वकृतिं विधातुं
पूरोस्वा स्वादृष्टयोगानुगुणं हि जीवः ।
तृणपर्णौ उपेत्य देहं समयावसाने
ऊर्द्ध्वं महास्वानिवासं नियमेन याति ॥४०

आज्ञापक एव जीवः पुनरेति देहं
सर्वान् लोके स्वकृत्यानुगुणं नियत्या ।
तत्रागत्यैकामकर्माचरणे निषक्ता
भोजितातागते यान्ति चिरं तथैव ॥४१

(क्रमशः)

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1·25; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 n.P ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 n.P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 n.P ·62 n.P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 n.P ; ·62 n.P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re, 1·25 ( for members ).

14. **Nala-damayantiyam** ( a new Drama ) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members ).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3.1 for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs 4 ( for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 ( for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 n.P ·62 n.P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., ·50 n.P

25. **Satyanubhavam** ( a new Mahakavya ) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs 4·50 n.P ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 n·P ; Re. 1·25 n.P ( for members ).

27. **Manavaka-gouravam**—(Drama) by M/M Kalipada Tarkacharya, Rs. 2·50 n.P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya, Rs. 1·50 n.p and 1·25 n.p (for members).

---

Vol. XXXXII. April 1960

No. 12 १८८१ शकीये

४२श-वर्षीय चैत्रे

१२श संख्या मासे



# संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

( Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta )

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकौ

श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थश्च

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—1-4d

अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनस्य

# आवेदनम्

अखिलभारतसम्मानिता संस्कृतभाषा यथा भारतराष्ट्रस्य राजभाषात्वेन परिगणिता स्यात् तदर्थं १९५८ खृष्टाब्दीये मे-मासे युगाचार्य-श्रीश्रीसीताराम-दासोङ्कारनाथचरणानां प्रधानाध्यक्ष्येण कलिकातामहानगर्यामेकमखिलभारतीय-संस्कृतराष्ट्रभाषासम्मेलनमनुष्ठितम्। तत्र तदीयोद्देश्यसाधनाय काचित् साधारणपरिषत् काचित् कार्यनिर्वाहकपरिषच्च सुसंघटिते। तत्र तत्र सर्वेषां भारतहितैषिणां यथासम्भवं सदस्यपदाधिकारेण सर्वथा साहाय्यकविनियोगः सम्प्रार्थ्यते।

तत्र साधारणसदस्यपदाधिकाराय प्रतिवर्षमेकं रूप्यकं कार्यनिर्वाहकसदस्य-पदाधिकाराय च रूप्यकत्रयं सम्पादकसविधे दातव्यम्।

विनीत—

स्थानसङ्केत :—
३८ शम्भुनाथपण्डित ष्ट्रीट्
कलिकाता-२०

**श्रीनिर्मलचन्द्रदासगुप्त-**
**श्रीनगेन्द्रनारायणचतुर्धुरीणयोः**
सम्पादकयोः

## तत्र विशिष्टकर्माध्यक्षा :—

पूज्यपाद—श्रीश्रीसीतारामदासोङ्कारनाथमहाराजः ( सभापतिः )
डाः—श्रीनलिनीरञ्जनसेनगुप्त एम्-डि-महोदयः ( कार्यनिर्वाहकसभापतिः )
विचारपति—श्रीरमाप्रसादमुखोपाध्याय एम् ए. वि-एल् ( पृष्ठपोषकः )
श्रीश्रीजीवन्यायतीर्थ—श्रीचपलाकान्तभट्टाचार्य एम्-ए—श्रीवसन्तकुमार-चट्टोपाध्याय एम्-ए प्रमुखाः ( सहसभापतयः )। उक्तौ सम्पादकौ च।

---

Printed by Bishnupada Bhattacharyya M. A. Kavyatirtha, at Calcutta Oriental Press Private Ltd., 9 Panchanan Ghose Lane, Calcutta and published by the same from Sanskrit Sahitya Parishad, 168/1, Raja Dinendra Street, Shyambazar, Calcutta—4.

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृतसाहित्यपरिषत्

Vol. XXXXII. No. 12 | १८८१-शकीये चैत्रे ४२श-वर्षस्य १२श-संख्या | April 1960.

## मतिमञ्जरी

### स्नेह-बन्धनम्

[ निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः ]

उपविष्टा शचीदेवी वामतलविन्यस्तकपोला। पार्श्वे दण्डायमाना देवी विष्णुप्रिया। विषादच्छाया वदनमण्डलं व्याप्तावती न वा न निर्णेतुं शक्यते—किन्तु आश्चर्य्यवत्पश्यति आश्चर्य्यवच्छृणोतीति यत् तत् सत्यमेव। युक्तञ्चैतत्-यत आश्चर्य्यमयेनोद्भासितः प्राक् शचीगर्भः—ततश्च भुवनभवनाङ्गनम्। शचीजनन्या पुनर्ज्ञातं ममायमङ्कपरिलुण्ठितः सुतो ममैव हृदयगेहनन्दनः। स्थूलतया पुत्रं प्रति मातुः पितुर्वा यादृशः स्नेहः स्वाभाविकः सोऽत्रापि। यथाशास्त्रं संस्कृत्य विद्याग्राहणानन्तरं विवाह्य च दृढीकृतं स्नेहबन्धनम्। बालस्य ततः किशोरस्य ततश्च युवकस्यापि तस्य भावान्तरं विलोक्य चिन्तान्विता शचीमाता। उपरतायां प्रथमप्रणयिन्यां लक्ष्मीदेव्यां पुनरुद्वाहेन विष्णुप्रिया समानीता या युवत्यपि स्निग्धगम्भीरा विदुष्यपि तत्त्वनिर्णयसन्दिन्धा सत्यपि सन्तापकारणे सर्वथोदासीना। अत एवाश्चर्य्यं सर्वतः।

द्वापरे यशोदा जननी यं नवनीतचौरं रज्जुबन्धनबद्धं कर्तुं न शशाक। गोपीभिः प्रेम्णा स्वायत्तीकृतोऽपि दोषलवेनापि यो दृढं प्रेमबन्धनं क्षणेन

चिच्छेद। सोऽयं नु शचीगृहं प्रोज्ज्वलयन् जनन्याः स्नेहबन्धनं छेत्तुं प्रयतते स्म। अयि नटराज!

प्रेमावतार! करुणामय! लोकनाथ!
लीलाकृतौ निपुण! किं न कृपा स्वगेहे?
स्नेहं विभिद्य सहसा गतवान् गृहाद् यज्
जायाप्रसूजनकचित्तविदारि तन्न?

शोचति जननीति कृत्वा किं ते माया न जायते? मायाधीश! शक्ष्यसि समये मायामुच्छेत्तुमेताम्। नहि नहि शचीदेव्या अभिमानभूतं ते शरीरम्। तदभिमाननाशायायमारम्भः? विष्णुप्रिया चिन्तयति,—

यः सर्वदा नियमितो भवबन्धनाशे
भार्य्यासुतादिविभवैरतिबन्धनेहा।
हासाय तद्व्यवसितं न च तस्य बन्धो
रुद्धं तु केन गमनं नु सदागतेर्वा॥

एवमेव प्रयासो व्यर्थीकृतो मालादिपरिजनानां परिकरावलम्बनैर्महापुरुषैः। वंशीसंकेतध्वनिश्रवणानन्तरं गोप्यो यत्करुणया दुर्जयगेहश्रृङ्खलं निर्भिद्य "जारबुद्धयापि सङ्गाः" "जहुर्विरहजं तापं सद्यः प्रक्षीणबन्धनाः।" उपनिषदि यत्करुणा "यमेवैष वृणुते तेन लभ्यः" इति वर्णिता। तेन करुणामयेन कथं मातरि तत्त्वमुद्घाटयता मातॄणां स्नेहबन्धनं न छिन्नम्? एषैव माया सर्वदा-वृणोति गर्भधारिणीमपि। प्रवर्ततां सर्वत्रैव ते क्रीडा। द्वापरावतारः कर्तव्यकठोरः स्ववंशीयानामप्यपराधं न चक्षमे। अयं तु शचीनन्दनः सर्वेषामपराधखण्डनाय जातः। अपराधिनोऽप्युपदेशेन स्वमहिम्ना च पवित्रीचकार। अत एव "युगे युगे च ये धर्माः" इत्याद्युक्त्या युगावतारोऽयं कलिहतानामुद्धाराय समायातः,—ततश्च प्रेम्णा सर्वान् वशीकर्तुमियेष। श्रीकृष्णस्य प्रेम गोपीजनेषु न सीमाबद्धम्, किन्तु तदिदं दुर्ज्जनेष्वपराधिष्वपकारिष्वपि सर्वत्र। साधनादि-विहीनानां कलिकलुषजर्ज्जरितानां कल्याणाय नाम-संकीर्तनं तेन प्रचारितम्— गुणाश्च वर्णिता नामसंकीर्तनस्य ;—यथा,

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणम्
श्रेयःकैरवचन्द्रिकावितरणं विद्यावधूजीवनम्।
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसंकीर्तनम् ॥ इति।

यद्यधुना वयं नामसंकीर्तनद्वारा चेतोदर्पणं निर्मलीकर्त्तुं प्रभवेम तदा दुर्णयादीनि पापानि अपगतानि अस्मान् भारतस्य योग्यान् नागरिकान् विदध्युः। कर्तव्यसम्पादने स्नेहादयो न प्रतिबन्धका इत्यपि प्रमाणीकृतं तेन।

प्राक्चिलितावस्थायामपि जायामातृदुःखं तृणीकृत्य महाप्रभुर्विश्वम्भरः स्वकर्त्तव्यं नामप्रचारणादिकं सम्पादयामासेति किमत्र चित्रम्? महामानवस्य सर्वमेव विचित्रमिति। तस्य महापुरुषस्य जन्मदिवसे तल्लीलाकणां विचिन्त्य वयं धन्याः,—सर्वैश्च श्रेयोलाभाय महापुरुषवाक्यैः सह स्वरं संयोज्य गीयताम्—

न धनं न जनं न सुन्दरीं
कवितां वा जगदीश कामये।
मम जन्मनि जन्मनीश्वरे
भवताद् भक्तिरहैतुकी त्वयि ॥ इति।

---

## श्रीकृष्णाविर्भावकालः

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

बाल्मीकिरामायणस्योत्तरकाण्डे त्रिषष्टितमसर्गे नृगस्य राजर्षेः कृकलासत्व प्राप्तिशापस्य निष्कृतिकथनावसरे—

"उत्पत्स्यते हि लोकेऽस्मिन् यदूनां कीर्त्तिवर्द्धनः।
वासुदेव इति ख्यातो विष्णुः पुरुष-विग्रहः ॥
स ते मोक्षयिता शापाद् राजंस्तस्माद् भविष्यति।
कृता च तेन कालेन निष्कृतिस्ते भविष्यति ॥
भारावतारणार्थं हि नरनारायणावुभौ।
उत्पत्स्येते महावीर्यौ कलौ युग उपस्थिते ॥ इति

राजतरङ्गिणीकारोऽपि कुरुपाण्डवोत्पत्तिकालवर्णनेन रामायणोक्तिमेव सविशेषं प्रतिपादयति,—तथाहि

शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षेषु ह्यभवन् कुरुपाण्डवाः ॥ इति

एतेन कलेस्त्र्यधिकसार्द्धषट्छतवर्षानन्तरं कुरुपाण्डवानामुत्पत्तिरिति विज्ञायते । रामायणप्रमाणेन च कलावेव श्रीकृष्णस्याविर्भाव इति सामान्यतः प्रतीतावपि राजतरङ्गिणीवाक्यैकवाक्यतया कलेस्त्र्यधिकसार्द्धषट्छतवर्षानन्तरं भगवतः श्रीकृष्णस्यापि स्वाभिर्भाव इति निर्विवादमायाति । कुरुपाण्डवकालसमकाल एव श्रीकृष्णस्य लीलाविलासकाल इति लोकशास्त्रप्रसिद्धम् ।

एवं किल भगवतः श्रीकृष्णस्य कलिकालाधिकरणकाविर्भावे शास्त्रप्रमाण-सिद्धेऽपि भागवतशास्त्रीयार्थमन्यथयितुम्प्रवर्त्तमानानां केषाञ्चिल्लेखभङ्गीं प्रसङ्गतः समुत्थापयामि सुधियां परमार्थनिर्णायकानां पुरतः ।

भागवतदशमस्कन्धे वसुदेवेन प्रेषितस्तत्कुलपुरोहितो गर्गो व्रजस्थानं प्राप्य रामकृष्णौ नामकरणसंस्कारेण संस्कृतौ कृत्वा नन्दराजं सम्भाष्याह,—

"आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः ।
शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥ इति ।

एतद्वाक्यान्तर्गतस्येदानीमितिपदस्य प्रकरणादिनियमवशेन स्वारसिकं कला-वित्यर्थमपह्नुवानेन केनचित् पण्डितवर्य्येण *तु दैहिकशक्तिगौरवेण "द्वापरे" इत्यर्थः कल्पितः ।

अन्यच्च तस्यैव भागवतस्यैकादशस्कन्धे,—

"कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥ इति निमिप्रश्ने

करभाजनमुनिराह,—"कृते शुक्लः"..."त्रेतायां रक्तवर्णः"..."द्वापरे श्यामः" ...कलौ तावत्तथा शृणु,—"कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।

---

* अयं किल श्रीजीवगोस्वामिपाद-विरचितषट्सन्दर्भान्तर्गत-तत्त्व-सन्दर्भांशस्य टीकाकारः

यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥ इति ।

अत्र कृष्णवर्णमितिपदं "इदानीं कृष्णतां गत" इति पूर्व्वोक्तस्यैवानुवादत्वेन वर्णितम् । त्विषा कृष्णमिति विशेषणन्तु "गुणक्रियादिवाचक-शब्दानां पुनरुक्ति-स्तदातिशय्यं व्यनक्ति इति नियमेन इन्द्रनीलमणिवदुज्ज्वल-कृष्णवर्णमिति द्योतनाय उपन्यस्तम् । कलौ जपयज्ञस्य प्राधान्यात् संकीर्त्तन-प्रायैः संकीर्त्तनबहुलैरिति यज्ञस्य विशेषणमिति सुखेन प्रतीयते ।

तत्त्वसन्दर्भटीकाकृता पण्डितप्रवरेण तु प्रश्नक्रमेणोपागतमपि भगवन्तमिति विशेष्यमनादृत्य त्विषा अकृष्णमिति अकारं प्रश्लिष्य त्विषा देहकान्त्या अकृष्णं पीतमित्यर्थयता तस्यैव विशेष्यत्वेन समुल्लेखः कृतः । पीतस्तावत् कुत्रान्वेतीति शङ्काकलङ्कनिरसनाय च "आसन्" इति क्रियाया भूतार्थता-मुपेत्य परिशेषानुमानेनात्र पीतार्थतां समारोपयितुं महान् खलु प्रयासः कृतः । देहस्य पीतकान्त्याऽभिभूतत्वात् कृष्णवर्णो बहिर्न दृश्यत इत्यप्युक्तम् ।

किञ्चिदत्र मे वक्तव्यमस्ति,—

त्विषाऽकृष्णमित्यकारप्रश्लेषेणापि विरोधार्थेन नञा समासात् सितमित्यर्थ एव पर्य्यवस्यति, न तु पीतमिति । संज्ञाशब्दत्वाभावाच्च युधिष्ठिरादिवत्तद् विशेष्यं भवितुं नार्हति ।

विश्वरूपस्य भगवतो रूपाणामियत्ता नास्ति, स खलु भगवान् साधकानां हिताय बहूनि रूपाणि परिगृह्णाति । "आसन् वर्णास्त्रयो ह्यस्य" इत्यनन्तरं गर्गेणाप्युक्तम् "बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्म्मानुरूपाणि तान्यहं वेद नो जनाः" । इति । तदेकस्मिन्नेव युगे रूपद्वयग्रहणं भगवतो नासम्भाव्यमिति मन्यते । यदस्माभिः प्रत्यहमच्चर्यते नारायणरूपं भगवतस्तत् पीतवर्णम् । "द्वापरे भगवान् श्याम" इत्यनन्तरं पूजनप्रचारवर्णने नारायण-नामापि परिगीतम् । अतो द्वापरे भगवान् श्यामः द्वापरे भगवान् पीत इत्युभयमपि सङ्गच्छते । यदि तावत् तत्त्वसन्दर्भांश-व्याख्याकार एकत्र युगे भगवतो रूपद्वयग्रहणं न सहेत तर्हि परिभाषाश्रयेण श्यामशब्देन पीतार्थानयने यत्नं कुर्यात् । युगानुसारेण वर्णक्रमोऽपि तेन रचितो भवेत् । न तु दैहिकशक्तिगौरवेण शास्त्रार्थमाकुलीकुर्यादिति प्रार्थयामहे ।

यदप्युक्तं देहस्य पीतकान्त्याऽभिभूतत्वात् कृष्णवर्णो बहिर्न दृश्यत इति तदपि विरुद्धमिव प्रतिभासते, यतः सर्व्ववर्णाच्छादकस्य कृष्णवर्णस्य वर्णान्तरेणाभिभवो न सम्भवेत्। तदत्रभवन्तो विद्वांसोऽत्र प्रमाणम्।

---

# वेदान्तविमर्शः

[ निबन्धकः— श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तः )

"ऊर्द्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्य्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥"

इति स्मृतौ हिरण्यगर्भलोकमतिक्रम्य गमनोक्तेस्तदूर्द्ध्वं पारमेश्वरमेव धाम ब्रह्मलोकः, परैश्च हिरण्यगर्भलोकादूर्द्ध्वं गतिर्नेष्यते। तस्मात् श्रौतः प्रजापतिलोको हिरण्यगर्भलोकः ब्रह्मलोकश्च परब्रह्मलोक एवेति स्थितम्। वक्ष्यते चोपरिष्टात्। समाधिः फलपर्य्यन्तोऽभिहित इतोऽप्यूर्द्ध्वं नान्यदस्ति वक्तव्यं श्रोतव्यं वा किञ्चित्, तर्हि किमर्थं प्रश्नो नृपतेरिति भीतोऽभून्मुनिः, अथाप्यस्ति साधनादीनां प्रश्नास्तन्निर्णयार्थमेवानुरोधो नृपतेरिति निर्णीतवान्। ततः पूर्व्वोक्तस्वप्नजाग्रद्व्यवहारवर्णनमुखेनोत्क्रमणादिक्रमेण ब्रह्मलोकगतितत्साधनादिकमुक्तवानिति।

केषाञ्चिन्मुक्तानां विग्रहवत्त्वं सूत्रकृताप्युक्तं "स्वभावे सन्ध्यवदुपपत्तेः" "भावे जाग्रद्वदि"ति। विग्रहवत्त्वेऽपि न सुखदुःखोपभोगप्रसङ्गः पुण्यपापाभावात् नारदादिवत्, आदित्यमण्डलस्थहिरण्मयपुरुषवच्च। मुक्तस्य सविग्रहत्वं श्रुतिर्दर्शयति, "तं पञ्च शतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं कणहस्तास्तं ब्रह्मालङ्कारेणालङ्कुर्व्वन्ती"ति।

मालावस्त्रादिभिरलङ्कृतत्वं सविग्रहस्यैव युज्यते, न खल्वाकाशकल्पं तत्त्वं शक्यतेऽलङ्कर्त्तुमिति प्राप्तं सविग्रहत्वं मुक्तानाम्। ब्रह्मालङ्कारेणेति श्रवणाद्

ब्रह्मणोऽपि तादृशालङ्कारवत्ताप्राप्तेः पर्य्यङ्कासीनत्वाच्च सविग्रहत्वं सहस्तित्वं श्रुत्यैव ज्ञेयम्। विस्तरस्तु सूत्रभाष्येऽनुसन्धेयः।

बौद्धाः शून्यवादिन एवाहुस्तत्त्वज्ञानेनाविद्यानाशात् तत्कार्य्यविश्वस्य प्रलयम्, तथाच चन्द्रकीर्त्ति :—

"तत्त्वदर्शनेन हि सर्व्वपदार्थानामेवानुपलम्भान्नास्ति किञ्चिद् यदालम्ब्य कर्म्म कुर्य्यात्।

संसारतस्तान् संस्कारानविद्वान् संस्करोत्यतः।
अविद्वान् कारकस्तस्मान्न विद्वांस्तत्त्वदर्शनात्॥
अविद्यायां निरुद्धायां संस्काराणामसम्भवात्।
अविद्याया निरोधस्तु ज्ञानेनास्यैव भावनादिति॥

सर्व्वदर्शनसंग्रहे शून्यवादप्रकरणे माधवाचार्योऽप्याह—

तत्त्वज्ञानादविद्यानाशे विश्वप्रलयात् शून्यरूपं परनिर्व्वाणं सिध्यतीति शून्यमेव च परमार्थसत्यं तेषां तदनुसारिणश्च मायावादिनस्तत्त्वज्ञानादविद्यानाशे विश्वप्रलयाद् घटभङ्गे घटाकाशस्य महाकाशत्ववज्जीवस्य ब्रह्मरूपतैव मुक्ति-रेषैव च साक्षान्मुक्तिरिति वदन्ति, श्रुतिभाष्ये च "परिमुच्यन्ते परि समन्तात् प्रदीपनिर्व्वाणवद् घटाकाशवच्च निवृत्तिमुपयान्तीति।" देहपातान्मुक्तिं ब्रह्मलोकगत्या ब्रह्मप्राप्तिं च वेदान्तसिद्धां क्रममुक्तित्वेन कल्पयन्तस्तुच्छी-कुर्व्वन्ति वेदप्रद्वेषात्। बौद्धनयमेव वेदान्तनयत्वेन यथाकथञ्चित् ख्यापयितुं श्रौतार्थानपहन्तुं च प्रयासाधिक्यं तेषाम्। सूत्रकृता मुक्तस्य सप्रपञ्चं ब्रह्मलोक-गत्यादिप्रकारं दर्शयतापि मुक्तेर्द्वैविध्यं कुत्राप्युक्तम्, न च तत्त्वज्ञानाद् विश्वप्रलयोऽप्युक्तः न च क्रममुक्ति-साक्षान्मुक्तिशब्दावप्युक्तौ वेदान्ते, न च वेदान्ता हिरण्यगर्भलोकगतानां तत्त्वज्ञानात् प्रलये तेन साकं परब्रह्मप्राप्तिं वदन्ति पूर्व्वोक्तश्रुतिषु मुक्तानामूर्द्ध्वगत्या परब्रह्मप्राप्तेरेव दर्शितत्वात्। अत्राचार्य्य-निराकृतं सांख्यमतमेवाश्रिता मायिकाः।

देहपातश्च भवत्यारब्धक्षयात्, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्ये" इति श्रुतेः, अत्र यावत्पदेन मुक्तौ विलम्बो दर्शितस्तत्र हेतुरारब्धं

कर्म्मैव, तस्य च भोगेन क्षये देहपातान्मुक्तौ ब्रह्मसम्पत्तिः। एतदेव दर्शितं सूत्रकृता "भोगेन त्वितरे क्षपयित्वाऽथ संपद्यन्ते" इति। ततश्चार्चिरादिगत्या ब्रह्मलोकप्राप्तौ ब्रह्मसम्पत्तिर्न ततः प्रागिति स्पष्टीभूतम्।

ब्रह्मसम्पत्त्युत्तरं च जीवस्य स्वरूपप्राप्तिः स्वं च रूपमपहतपाप्मत्वादिकं प्रजापतिवाक्ये दर्शितं छान्दोग्ये, ब्रह्मसम्पत्तिश्च मूर्द्धन्यनाड्या शरीरादपायादूर्द्ध्वं-गत्या ब्रह्मलोकप्राप्तौ, यावच्छरीरं शरीराश्रितत्वात् प्रियाप्रियाभ्यामुपगम आत्मनः, तथापि स्वतः शरीरशून्यस्याप्यात्मनः क्षुत्पिपासादिराहित्येऽपि शरीर-सम्बन्धादेव तस्य तद्वत्त्वं "तदस्याशरीरस्यामृतस्यात्मनोऽधिष्ठानमि"ति श्रुतेरग्नि-संयोगाज्जलस्योष्णत्ववत् सुरापानात् प्रमत्ततावच्च लोकस्य, न चोष्णत्वमारोपित-मबाधितत्वात् जलमुष्णमितिसर्व्वजनीनानुभवाच्च। "आत्तो वै सशरीरः प्रियाप्रियाभ्यामि"ति श्रुतेश्च। न चात्त इवेत्युक्तम्। सूत्रं च पारमर्षम् "अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवदि"ति। यथा स्वतः शुद्धस्याप्यग्नेः शवादिसंयोगादेव दुष्टत्वं तथा शुद्धस्याप्यात्मनो म्लेच्छादिदेहसम्बन्धादेव दुष्टत्वं ब्राह्मणादिदेहसम्बन्धाच्च तदभाव इति वेदाध्ययनादावनुज्ञाततत्परिहारश्च मन्तव्यः। रूढश्च ब्राह्मणादिशब्दो ब्राह्मणादिशरीराधिष्ठित आत्मनि, "आत्मनोऽधिष्ठानमि"ति श्रुतेः। अतो ब्राह्मणो यजेतेत्यादिशास्त्रवाक्योपपत्ति-रन्यथा मिथ्यात्वापत्तेः। शरीरसम्बन्धादेवात्मनः प्रियाप्रियाभ्यां देहगताभ्या-मात्मनः सम्बन्धस्ततश्च सुखदुःखोदय इति शरीरसम्बन्ध एवात्मनोऽत्र कारण-मित्यर्थः। न च जीवोऽसङ्गः "असङ्गो ह्ययं पुरुष" इति श्रुतेः स्वाप्नपुरुषपरत्वा-दिति दर्शितं सूत्रभाष्ये।

सशरीरत्वं शरीरयुक्तत्वं न शरीरात्माभिमानित्वरूपं तदस्यामृतस्याशरीरस्या-त्मनोऽधिष्ठानमित्येतत्समनन्तरमेवा"त्तो वै सशरीरः प्रियाप्रियाभ्या"मित्युक्तेः तत् शरीरम् अधिष्ठानमाश्रयः, शरीराश्रितत्वादेवात्मनः शरीरगतप्रियाप्रियाभ्यां सम्बन्ध इत्यर्थः, आभिमानिकत्वे चाधिष्ठानमनुक्त्वाभिमानास्पदमित्यवक्ष्यत्। यावच्छरीरावस्थिति तत्प्रियाप्रियाभ्यां सम्बन्धाच्छरीरसम्बन्धहानावेव प्रियाप्रियाभ्यां सम्बन्धाभावमाह "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत"

इति। अशरीरश्चात्मा भवति मुक्तौ, तदा देहादपायादात्मनः स्वरूपेणावस्थानात्। अशरीरत्वाच्च प्रियाप्रियाभ्यां सम्बन्धाभावः।

तथा हि साधनकलापपरिपाकोपजातवैशद्यवद् बुद्धिसञ्जातब्रह्मप्रत्ययच्छाकारवृत्त्या चिदानन्दमयापरिसीमब्रह्मस्वरूपाविर्भावात् स्वस्यापि तदंशस्य चिदानन्दरूपत्वादविभक्तत्वाच्चाहं ब्रह्मेत्युदेति ज्ञानं देहिनः, ततश्चानारब्धानां कर्म्मणां तेनैव क्षयादारब्धानां च भोगेनोच्छेदान्मुक्तिरात्मनः, ततश्चार्चिरादिगत्या ब्रह्मलोके ब्रह्मसम्पत्तावपहतपाप्मत्वादिस्वरूपेणाविर्भावस्तस्य, यथाह श्रुतिः "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति, सम्प्रसादः सुषुप्तिर्मुक्तेः पूर्व्वक्षणवर्त्ती जीवश्चोच्यते, तथा हि सम्यक् प्रसीदति स्वच्छीभवत्यत्र जीव इति सम्प्रसादः सुषुप्तिः तदा पुरीतत्प्रविष्टत्वान्मनःसम्बन्धाभावेन रागद्वेषसुखदुःखाद्यनुदयात् स्वच्छत्वमात्मनः, "नद्यः प्रसन्नसलिला"इतिवत्। न च तदानीं ब्रह्मसुखोपलब्धिर्विशुद्धबुद्धेरभावात्। तस्मान्मुक्तेः प्राक् कर्म्मणां यावतां विनाशात् तदुत्थरागद्वेषसुखदुःखानां चात्ययात् सम्यक् प्रसादः स्वच्छीभावो यस्येति व्युत्पत्तेस्तादृशो जीवश्च सम्प्रसाद उच्यते।

"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"इति श्रुत्यारब्धकर्म्मभोगादूर्द्ध्वं देहान्मुक्तौ ब्रह्मसम्पत्तेरुक्तेः शरीरादुत्क्रमानन्तरमेव ब्रह्मलोके ब्रह्मसम्पत्तावपहतपाप्मत्वादिस्वरूपेणाविर्भावो जीवस्य, न त्वत्रैव शरीरात्माभिमानत्यागेन स्वरूपप्राप्तिरिति ज्ञेयम्। जीवस्य ब्रह्मांशत्वात् सतामप्युपहतपाप्मत्वादीनां बद्धावस्थायां कर्म्मरूपाविद्यावशादग्निस्फुलिङ्गवदणुमात्रत्वाच्च तेषां तिरोधानात् ब्रह्मसम्पत्त्युत्तरमेवाविर्भावमाहाचार्यः "संपद्याविर्भावः स्वेन शब्दादि"ति। देहान्निःसृत्यार्चिरादिना ब्रह्मलोकगत्या ब्रह्म प्राप्य स्थितस्य स्वेन रूपेणापहतपाप्मत्वादिना प्रकरणोक्तेनाविर्भावो भवति "स्वेन रूपेणाभिनिष्पद्यते"इति श्रुतेरित्यर्थः। ततश्च ततः प्राक् न तेषामाविर्भाव इति। शरीरसम्बन्धपर्य्यन्तं पुण्यपापक्षुत्पिपासादिः स्यादेव बाधाभावात्, अत एव ज्ञानिनोऽपि पुण्यपापयोरागन्तुकयोर्मित्रामित्रसंक्रमणमुक्तं श्रुतौ "सुहृदः पुण्यकृत्या-

मुपयन्ति द्विषन्तः पापकृत्यामि"ति। श्रुतौ चापहतपाप्मत्वादिवदकर्तृत्वादेरनुक्तत्वात् कर्त्तृत्वादिरस्त्येव तस्य। शरीरात् समुत्थानानन्तरं यथाश्रुतमेव वाच्यम्, अभिनिष्पत्तिश्चाविर्भावरूपा सूत्रकृतैव दर्शितेति ततः प्राक् तिरोभूतास्ते इत्यर्थसिद्धमेवेति। एतेन नह्यन्यत उत्थाय स्वरूपं संप्रपत्तव्यमित्यकिञ्चित्करम्। न च ब्रह्मणः सत्याः कामाः सत्याः सङ्कल्पाश्च मायोपाधिनिमित्ताश्चिलगुवदस्वाभाविकाः, त्रिगुणमायाया वेदान्तेषु सिद्धेस्तदंशभूत-शुद्धसत्त्वोपाधेः सुतराम्। नेति नेतिश्रुतेश्च प्रकृतैतावत्त्वप्रतिषेध-परत्वस्य सूत्रकृतैवोक्तत्वाच्च "नामरूपे सत्यं" "कथमसतः सज्जायेते"त्यादिश्रुतिभिश्च जगतः सत्यत्वप्राप्तेर्मिथ्यात्वं दूरापेतम्। आत्मनः शरीरसम्बन्धस्याभिमानिकत्वे च सशरीरत्वानुपपत्तिः न ह्याबाल्याच्छूद्रगृहे पालितं ब्राह्मणं शूद्रत्वाभिमानिनमशूद्रमावष्टे लोके सहत्वस्य भेदव्याप्यत्वात्, किन्तु शूद्रमेव। तथात्वे च न ह वै शरीरात्माभिमानिप्रियाप्रिययोरपहतिरस्तीत्येव युक्तं वक्तुम् आत्मनोऽधिष्ठानोक्तेश्च शरीराश्रितत्वमेव सशरीरत्वं प्राप्तम्। अभिमानेऽपि सशरीरत्वमेव वीजमिति सशरीरस्येत्युक्तंश्रुतौ। अभिमानाभावश्च समाधावात्मैकनिष्ठतायामेव बुद्धेः, व्युत्थाने च देहनिष्ठत्वादभिमानः। अतो व्यासवशिष्ठयोः पुत्रविरहाच्छोकः। "मिथिलायां प्रदग्धायां न मे दह्यति किञ्चने"ति च समाध्यभिप्रायं ज्ञेयम्। सुखित्वदुःखित्वादेर्ब्राह्मणादिशरीरसंयोगनिबन्धनपविलापवित्वतादेश्च बाधाभावादात्मनस्तद्वत्त्वमग्निसंयोगाज्जलोष्णत्ववदग्निस्फुलिङ्गवदतिक्षुद्रत्वाद् भिन्नत्वाच्च ब्रह्मणो युक्तम्। "भेदव्यपदेशाच्चास्य" इतिन्यायात्। विचारशास्त्रे च यथाक्रममर्चिरादिगत्या परब्रह्मप्राप्तिपर्य्यन्तं तृतीयपादेऽभिधाय चतुर्थपादेऽपहतपाप्मत्वादिस्वरूपप्राप्तिः सूत्रिताचार्यैः "संपद्याविर्भाव"इति। तस्मान्नाशरीरत्वमत्रै वेत्यलमतिपल्लवितेनेति दिक्।

(क्रमशः)

---

# योगिभक्तचरितम्

( काव्यम् )

(निबन्धकः—श्रीकाश्यपकविः)

( पूर्वानुवृत्तम् )

परं शुभादृष्टवशेन काले निष्कामकर्माचरणेन जीवः ।
प्रपद्यते यावदितोऽपवर्गं तावद् गतायातनिवृत्तिरस्य ॥४२

इत्थं किलालङ्घ्यनये भवस्य का शोकवार्त्ता वपुषः प्रयाणे ।
पूर्णः स कालो यदि मे क्रियाया ध्रुवं परित्याज्यमिदं नियत्या ॥४३

पराशर-व्यास-वशिष्ठमुख्याः प्रख्यातपूर्वा अपि पूर्वजा नः ।
कालं कियन्तं प्रविधाय कृत्यं देहं विनिर्मुच्य गताः स्वलोकम् ॥४४

यत् कर्म कर्त्तुं समुपागतोऽहं तत् कर्म शक्त्या विहितं मयास्मिन् ।
यच्चावशिष्टं तदिहाप्रमत्तैर्युष्माभिरस्मात् परतः प्रसाध्यम् ॥४५

अहं पुरा धूर्जटिनोपदिष्टः स्वशिष्यधारापरिरक्षणार्थम् ।
सुशिक्षितैः शिष्यगणैर्मदीयैर्मत्सम्प्रदायः परिरक्षणीयः ॥४६

वाचा तथा कृत्यपरम्पराभिः शिष्यैस्तथा यत्नचयो विधेयः ।
यथा न धर्मान्तरमत्र दस्रं सनातनं धर्ममधो विदध्यात् ॥४७

शीलं विशुद्धं परिपालनीयं धर्माद् बहिः कर्म न वर्त्तनीयम् ।
ईशानुवृत्तिः सततं विधेया माया तथा कर्मपथे प्रहेया ॥४८

ध्यानप्रकाश ! प्रथमस्त्वमेषामतः परं त्वं भवितासि नेता ।
सर्वत्र सम्यक् त्वमसौ विनीतो दृढव्रतः साधुजनप्रियश्च ॥४९

शीलेन योगादिविधिप्रकर्षैः शिष्याः समस्तास्त्वयि भक्तिमन्तः ।
अतस्त्वमेवासि सुयोग्यनेता मदाश्रमस्यास्य नृणां विनेता ॥५०

तदाशिषा त्वां परिवर्द्धयामि भक्तिस्तवास्तां भगवत्यनन्ता ।
योगेन सिद्धिं व्रज विन्द मोदं त्वया विनेत्राश्रम एष जीयात् ॥५१

एवं वदन्नेव स योगिराजः शिष्येषु शृण्वत्सु सवाष्पनेत्रम् ।
सस्मार वैकुण्ठपतिं परेशं कृताञ्जलिश्चापि जगाद पश्चात् ॥५२
हे नाथ ! दीर्घः समयो गतो मे भवन्तमुत्सृज्य भवे स्थितस्य ।
कस्त्वा पुनस्त्वामुपलभ्य साक्षान्निरत्ययानन्दरसं भजेयम् ॥५३
उच्चारयन्नेव तदिद्धभक्त्या स योगिराजोऽभवदूर्द्ध्वनेत्रः ।
स्रस्तोऽञ्जलिस्तस्य वचो निरुद्धं तेजः किमप्यूर्द्ध्वमगाच्छिरस्तः ॥५४
तच्चिह्नमालोक्य सुविस्मयेन पर्य्याकुलेनापि तथान्तरेण ।
आकारितः शिष्यगणैर्विषण्णैर्यत्नेन साकं भिषगग्रयायी ॥५५
आगत्य सोऽयं सुपरीक्ष्य देहं व्यघोषयज्जीवनविप्रयोगम् ।
पितुर्वियोगादिव पुत्रसङ्घः शुचा व्यरोदीदथ शिष्यवर्गः ॥५६
तद् वृत्तमाकर्ण्य ततः क्रमेण तदाश्रमे सम्मिलितैर्जनौघैः ।
संमर्दभाग्भिः सविषादनादैर्जितस्तरङ्गैर्मुखरः पयोधिः ॥५७
भक्त्या तदानीं जनताविसृष्टैः पुष्पैस्तथा माल्यचयैः सुगन्धैः ।
निःशेषमाच्छादितमेव जातं श्रीयोगिराजस्य वपुर्विसंज्ञम् ॥५८
अथान्त्यपूजां सशमं चरित्वा धूपादिकारात्रिकवस्तुजातैः ।
कालं महान्तं समपेक्ष्य भक्तास्तं जाह्नवीतीरगतं प्रचक्रुः ॥५९
शोकाश्रुणा साकमभिप्रजातः समुद्गतस्तप्ततरश्चिताग्निः ।
स्वल्पेन कालेन तदीयकायं भस्मावशेषं महसा चकार ॥६०
अथास्थिशेषस्य कियन्तमंशं तथातिपूतं भसितञ्च किञ्चित् ।
निक्षिप्य गङ्गासलिले समन्त्रं भस्मास्थिशेषेण ययुः सुभक्ताः ॥६१
अथ गुरुपरिहीणं श्रीगुरोराश्रमं तं नयनसलिलधाराप्लावितोरःस्थलास्ते ।
हृदयविधृतशोकज्वालया सम्प्रविश्य धरणिलुठितदेहा मोहमग्ना बभूवुः ॥६२

इति काश्यपकविकृते योगिभक्तचरिते काव्ये योगिराजमहा-
प्रयाणाभिधानः अष्टादशः सर्गः समाप्तः ॥१८

( क्रमशः )

# विहग-युगलम्

[ कविसार्वभौम-रवीन्द्रनाथकृत-'दुइ-पाखी' पद्यस्य संस्कृतानुवादः ]

( निबन्धकः—श्रीकाश्यपकविः )

आसीत् पिञ्जरविहगो जाम्बूनदपिञ्जरे कृतावासः ।
न्यवसत् काननविहगः समाश्रितः काननावासम् ।।
अभवत् साक्षात्कारः कथमप्यनयोः कदाचिदन्योन्यम् ।
अविदितमिदमेकान्तं कः खलु कामो विधेस्तस्मिन् ॥
अवदत् काननविहगो पिञ्जरकविहङ्गम भ्रातः !
एहि मिलन्तावावां द्वौ वनमध्यं प्रवेक्ष्यावः ॥
पिञ्जरविहगेनोक्तं काननवासिन् ! विहङ्गमोपैहि ।
पिञ्जरमध्यासीनौ वासं निरुपप्लवं कुर्वः ॥
नेत्याह वन्यविहगः शृङ्खलबन्धं न चानुगन्तास्मि ।
अवदत् पिञ्जरपक्षी कथमेषोऽहं वने वहिर्यायाम् ॥
वन्यं गीतवितानं वन्योऽगायत् खगो वहिस्तिष्ठन् ।
अन्योऽपठदुपदिष्टां वाचं भाषा द्वयोः पृथग्भूता ॥
वन्यः प्राह विहङ्गः पिञ्जरवासिन् विहङ्गम भ्रातः !
तन्ननु कुरु सङ्गीतं यद् वनयोग्यं भवेत्तावत् ॥
अवदत् पिञ्जरपक्षी हंहो काननविहङ्गम भ्रातः !
धारय शिक्षाविधिना पिञ्जरयोग्यं हि सङ्गीतम् ॥
नहि, नो परोपदिष्टं गीतपदं मे किलाभीष्टम् ।
इत्याह वन्यपक्षी पिञ्जरमध्ये स्थितं गरुत्मन्तम् ॥
पिञ्जरविहगोऽवादीत् कथमहमेष क्षमेय हा हन्त!
सङ्गीतं तद् गातुं यद् विपिनस्यौचितीं यायात् ॥

प्राह विहङ्गो वन्यः सुनिविडनीलं किलाकाशम् ।
तस्य क्वापि न देशे काचन वाधा गतेरास्ते ॥
पिञ्जरविहगेनोक्तं पिञ्जरघटना परं रम्या ।
अस्य हि पार्श्वचतुष्कं कथमिव वरणैर्वृतं भाति ॥
जलधरनिकरस्यान्तर्मुञ्चैकान्तं किलात्मानम् ।
वन्यः प्राह विहङ्गः पिञ्जरबद्धं पतत्त्रिणां तावत् ॥
अवदत् पिञ्जरपक्षी तदनु विहङ्गं किलारण्यम् ।
स्थापय बद्ध्वात्मानं सुखमयकोणे निरातङ्के ॥
नेति निषेधं कृत्वा विपिननिवासी खगोऽवादीत् ।
उत्पतनाय हि लभ्यं क्व नु खलु तस्मिन् मया स्थानम् ॥
पिञ्जरवासी विहगस्तदनु प्राहाण्डजं किलारण्यम् ।
हा हा हन्त पयोदे क्व मया लभ्यं स्थितिस्थानम् ?
एवं खलु खगयुगलं प्रणयं प्रागात् परस्परालम्बम् ।
न तथाप्यलमास्तैकः सविधे ह्यपरं परिप्राप्तुम् ॥
पिञ्जरत्र्यवकाशैरकृत मुखाभ्यां परस्परं स्पर्शम् ।
नयनं निधाय नयने नीरवमीक्षाम्बभूव चान्योन्यम् ॥
एको नहि परभावं वोद्धुं सुतरामलं जातः ।
नापि खगतं भावं ग्राहयितुं स क्षमत्वमापेदे ॥
एकैकाकितया द्वौ कृत्वा व्यर्थं गरुत्समुत्क्षेपम् ।
आर्त्तिमयं समलपतां सन्निधिमासादयस्वेति ॥
नेत्युक्त्या प्रतिषिध्यैतत् प्राह वन्यो विहङ्गमः ।
कदा वा पिञ्जरद्वारं नितरामवरोत्स्यति ॥
वन्यं प्रति विहङ्गेन प्रोक्तं पिञ्जरवर्त्तिना ।
हा हा हन्त न मे शक्तिरस्त्युत्पतितुमात्मना ॥

---

राजस्थानसंस्कृतसाहित्यसम्मेलनस्य भीलवाड़ाधिवेशने तदीयशिक्षापरिषदध्यक्ष-
परिडतप्रवर-ब्रह्मश्री-**पट्टाभिरामशास्त्रि**-शास्त्ररत्नाकर-
विद्यासागर-मीमांसान्यायसाहित्याचार्य्याणाम्

# अभिभाषणम्

( पूर्वानुवृत्तम् )

मदीयानि वचनानि कर्णकठोराण्येव भवेयुः। ममाप्येवमेवेमानि प्रतिभान्ति। 'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्' इति मानवीं सूक्तिमुल्लङ्घ्यैवाहं प्रवर्तमानोऽस्मि। किं मया क्रियताम्? एवंकथनं कदाचिन्महाफलाय स्यादिति विभाव्य कथयामि। एतस्य कृते कामं विधीयतां प्रायश्चित्तं मे सदसस्पतिभिस्सदस्यैश्च। सानन्दमहं तदाचरामि। भारतस्य प्राणो वेदः, अपूर्वश्च कश्चन निधिरिति पूर्वमवोचम्। तद्रक्षणायैव सर्वाणि विद्यास्थानानि महर्षिभिः प्रवर्तितानीत्यपि पूर्वमकथयम्। एवं सत्यामपि मर्यादायां तामुल्लङ्घ्य यथेच्छं तदानुपूर्वीमपि परिवर्त्य, पुस्तकाकारेण सम्मुद्र्य तच्छिक्षयति निरंकुशं कश्चन समुदायः। महानयं कुठाराघातो वेदस्य। अर्थांशे यथा तथा वा स्वस्व-सिद्धान्तानुसारमाकृष्यतां केशेषु गृहीत्वा भगवती श्रुतिः, किन्तु तदानुपूर्व्याः परिवर्तने मन्येऽहं भगवतः परमेष्ठिनोऽपि नाधिकार इति। आ च भगवतः प्रथमायाः सृष्टेः आ चैतन्निमेषाद् यादृशस्वरवर्ण-क्रमविशिष्टानुपूर्वी सम्प्रदायतस्समागता, तस्याः परिपालने सम्प्रति भारते द्वात्रिंशत्कोटिसंख्याकेषु जनेषु सहस्रं जनास्सन्ति वा नवेति सन्देह एव। ये च सन्ति तेऽपि मुमूर्षव एव। तत्राप्ययं नृशंसः कुठाराघातः। पुस्तकरूपेण पुस्तकालयेषु वर्तन्त इत्येव गौरवं भारतस्य न भवेत्, इमानि हि पुस्तकानि विदेशीयानां पुस्तकालयेष्वपि वर्तेरन्। विदेशेभ्यो भारतस्य किञ्चि-द्वैशिष्ट्यं हार्देन भावेन यदि वयं वाञ्छामस्तर्हि पुस्तकानां संरक्षणेनैव तन्न सिध्येत्। कण्ठे तद्धारयितारः कतिपये समुत्पादनीया अस्माभिः। न सन्तु

ग्रामे ग्रामे नगरे नगरे वा वेदस्याध्येतारः, एकैकस्मिन् मण्डले तादृशाः कतिपये भवन्तु। यदि मण्डलेऽपि कर्तुमिदं दुःशकं प्रतिभायात्तर्हि तत्तत्प्रान्ते वाऽवश्यमिमे रक्षणीयाः। तत्र चतुर्णामपि वेदानां सम्प्रदायतो ये रक्षकास्ते ऽन्वेष्टव्याः। सम्प्रदायशब्दान्न भेतव्यम्। सम्प्रदायो नाम 'शिष्योपाध्यायसम्बन्धस्याविच्छेदेन शास्त्रप्राप्तिः' इति न्यायवार्तिककारः श्रीभारद्वाजोद्योतकरो ब्रवीति। अविच्छेदेन गुरुशिष्यपारम्पर्यमेव सम्प्रदायः। नात्रैकदेशीयताबुद्धिरुदेति। सम्प्रदायोऽयं तन्तुर्भवति। तन्तुर्यथा त्रुटितो न भवेत् तथा तद्रक्षणमस्मत्कर्तव्यम्। तथासति निरङ्कुशं वेदानुपूर्वी-परिवर्तयितॄणां प्रवेशो न भवेत्। एवं कृते सति "यथा सम्पुष्पितस्य वृक्षस्य दूराद् गन्धो वाति" इति श्रुत्यर्थानुसारं भारतस्य गौरवं पुरेव सर्वतः प्रसृतं स्यात्।

चतुर्दशविद्यास्थानानां परिपालनायैव केवलं कश्चन विश्वविद्यालय-स्संस्थापनीयः, यस्मिंश्चानुभवशालिनो गुरु-शिष्यपारम्पर्यपरिरक्षकाः सादरं नियोक्तव्याः। यद्यपीमेऽधुनातनैरुपाधिभिः शास्त्राचार्यशिरोमणितीर्थ-प्रभृतिभिर्न भूषिताः, तथाप्युपाधौ मोहमुत्सृज्य निरुपाधिका एवान्विष्य शोभनेऽस्मिन् कर्मणि नियोज्याः। काममिमेऽपरवयसि वर्तन्ताम्, वयःक्रमनियमं लघूकृत्य योग्यानां छात्राणां समुत्पादनाय ते प्रार्थनीयाः। शिक्षकाणामपि शिक्षायै व्यवस्थास्मिन्विश्वविद्यालये विधेया। योग्यानामध्यापकानामेव सम्प्रति वैरल्यं दृश्यते। तेषां समुत्पादने विशेषेण दृष्टिः कर्तव्या। अल्पीयसैव कालेन संस्कृतभाषायां प्रवेशो लोकानां भवितुमर्हति, किन्तु तत्र पाठनशैली काचन मनोहरा निर्द्धारणीया। तदर्थं परिपक्वबुद्धयः प्रेरणीयाः। सन्ति सम्प्रत्यपि शोभनं मार्गं प्रदर्शयितुं कुशला वैदुष्यातिशयेन वयसा च वृद्धाः पूज्यपूजनीयाः म० म० गिरिधरशर्मा-नन्तकृष्णशास्त्रि-कालीपदतर्काचार्यप्रभृतयो महाभागाः। एतेषां साहाय्यमवलम्ब्य मनोहरं पन्थानं निर्णेतुं वयं प्रभवामः। एतेषां मार्गनिर्देशः संस्कृतजगतः कल्याणाय भवेत्। (क्रमशः)

---

# Sanskrit Sahitya Parishat Series

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1

2. **Kalitantram**—Edited by pt. Satish Chandra Siddhantabhushana. Re. 1·25; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2·50 ; Rs. 2. (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2·50. (Out of stock.)

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; ·75 n.P ( for members)

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. ·25 n.P

9. **Introduction to the Rigveda** of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1·50; Re. 1·25 (Out of stock ).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushana. ·88 n.P ·62 n.P (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs. 2·50 ; Rs. 2 ( for members ).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. ·75 n.P ; ·62 n.P (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharana Chakravarti, M. A. 1·50 Re. ; Re, 1·25 ( for members ).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16 **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2; Rs. 1·50 (for members)

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri M. A., B. L., Ph D with the assistance of Prof. Chintaharana Chakravarti, M. A. Rs. 5 ; Rs 4 (for members),

18. **Prameyaratnavali** of Baladeva Vidyabhushana—Ed. by Prof Akshayakumar Shastri, Rs. 2·50 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7·50 ; Rs. 6 (for members ). ( Out of stock )

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 ( for members).

21 **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharana Chakravarti. M. A. Rs. 1·25 ; Re. 1 (for members).

22 **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Rs. 1·50 ( for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma—Ed. by Pt. Janakinath Shastri. ·75 n.P ·62 n.P ( for members ).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharana Chakravarti Kavyatirtha M. A., ·50 n P

25. **Satyanubhavam** ( a new Mahakavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4·50 n.P ( for members).

26. **Sukhalekhanam** of Bharata Sena, Edited by Pt. Ramdhan Sastri. Rs. 1·50 n·P ; Re. 1·25 n.P ( for members ).

27. **Manavaka-gouravam**—(Drama) by M/M Kalipada Tarkacharya, Rs. 2·50 n.P and Rs. 2. (for members).

28. **Kapala Kundala**—(a drama based on Bankimachandra's Kapala Kundala) by Prof. Bishnupada Bhattacharyya. Rs. 1·50 n.p and 1·25 n.p (for members).

---

